# विषयसूची

## *(प्रथमपल्लवः) अष्टकादिस्तुतिकाव्यानि (५-२५)*



## *(द्वितीयपल्लवः) जन्मदिन-शुभैषा-काव्यानि (२६-५६)*

## *(तृतीयपल्लवः) विभिन्नकाव्यानि (५७-७३)*

## *(चतुर्थपल्लवः) अभिनन्दनकाव्यानि (७४-९४)*

## *(पञ्चमपल्लवः) श्रद्धाञ्जलिकाव्यानि (९५-१०२)*

# प्रथमपल्लवः

# अष्टकादिस्तुतिकाव्यानि

## ||| श्रीजगन्नाथाष्टकम् |||

************

शिवप्राणरूपं जगत्प्राणरूपं सुभूपाधिभूपं सदा शान्तरूपम्
अरूपानुरूपोपकारप्ररूपं सुरूपं जगन्नाथमुद्भावयामः।।१।।

अलक्ष्यैकलक्ष्यानुलक्ष्यप्रविष्टं समीक्षानिरीक्षापरीक्षाभ्यदृष्टम्
विवक्षुप्रवाक्षु प्रविष्टं विशिष्टं जगन्नाथमुद्भावयामोऽर्चयामः।।२।।

क्वचिच्छैलशीलैः क्वचित्पुष्पशीलैः क्वचिद्धैर्यशीलैः क्वचिन्नृत्यशीलैः
क्वचित्तापसैर्भक्तिशीलैस्सुवन्द्यं जगन्नाथसन्नाथमुद्गाथयामः।।३।।

समुद्रैस्सुमुद्रैर्विमुद्रैर्नुतं तं विभावप्रभावानुभावप्रभातम्
सुकाण्डं हरिं ब्रह्मभाण्डे भ्रमन्तं जगन्नाथपुर्यां वसन्तं नमामः।।४।।

अनाथैकनाथं सुगाथैकगाथं समस्थव्यवस्थैकपन्थानमाद्यम्
विबाधप्रबाधं समुद्रादगाधं समुद्रप्रियं तं मुदा सुस्मरामः।।५।।

श्रुतिस्मार्तसिद्धं नितान्तप्रसिद्धं समस्तार्थवत्सत्त्वतत्त्वानुविद्धम्
विवृद्धप्रवृद्धं समृद्धैकसिद्धं विशुद्धं जगन्नाथमाचिन्तयामः।।६।।

विभिन्नं हि निर्भिन्नरूपं विभान्तं महान्तं हिमांश्वेककान्तं भवान्तम्
महामेधिमेधाप्रदं तं स्वधान्तं हरिल्लोककान्तं समाराधयामः।।७।।

अखण्डं च तत्सच्चिदानन्दरूपम् , अवाक्चित्तसङ्गोचरं गोभरं तम्
स्मरान्तं स्मरारामदं रामरूपं सदा तद्धितं भीकृदन्तं स्मरामः।।८।।

हरिरक्ताऽद्य मज्जिह्वा तुलसीपत्रसेवनात्।
अतोऽष्टकं करोम्येतज्जगन्नाथगुणानुगः।।९।।

******

## ।। श्रीरामाष्टकम् ।।

*************

रामो राक्षसघातकोऽतिविमलो रामो हि धर्मो महान्
रामो वै हरिरेव दिव्यचरितो रामः प्रसन्नो गुणी
रामो दाशरथिस्सदा विजयते श्रीजानकीशो गुरुः
रामो मे हृदये वसेत्स भगवान् मुक्तिञ्च मे यच्छतु ।।१।।

 ISBN – 978-81-943558-3-0

रामः प्रेमपरश्शुभाशयमनाः रामो जगत्पालकः
रामश्श्रीहनुमत्प्रसन्नहृदयो रामस्स्वयं श्रीपतिः
रामस्त्रायत एव भक्तपुरुषान् संसारभीतेस्सदा
रामे मे मतिरस्तु हे शिवगुरो! नामास्य मत्तारकम्।।२।।

पाणौ यो धनुराशुगैश्च सहितं धृत्त्वा जनैर्लोक्यते
शान्तो दान्तमनाः प्रणम्यचरितः दूर्वाप्रभो भूप्रभुः
सत्यो धर्मवतां स धीरधरणस्त्राता द्विजानां गवां
शास्त्राचार-विचार-पारग-मुनिः, रामे मतिर्मे सदा ।।३।।

लीलामानवरूपधारिभगवन्! लीलालयोल्लीलनः
लोकालोकविलोकनेऽतिकुशलो लोभादिसंवर्जितः
त्वल्लीलामृतपायिनस्सुरपुरं यान्ति द्रुतं प्राणिनः
मां चालोकय हे दयार्द्रहृदय! प्रीतिर्मदीया त्वयि ।।४।।

हे हे नीतिगते![1] नतोन्नतिकर! श्रीवारिवाड्! लोकराट्!
त्वद्दासः परिसीदतीह जगतो व्याध्यादिभिर्व्याकुलः[2]
नाऽयं नैककठोरशास्त्रचरणो नायं रतस्त्वत्सुखे
वित्ताशापरिधावमानमनसा त्वां लप्स्यते नैव वा ।।५।।

चेद्दोषान् परिपश्यतीह भगवन्! नो कोटिवर्षैरपि
मुक्तिर्मे भविता, रमेश! कृपया त्वं चेत्समालोकयेः

[1] नीतिभिरेव गतिर्यस्य सः नीतिगतिः, तस्य सम्बुधौ नीतिगते। (अर्थात्प्रभुश्श्रीरामो नीतिमान् इत्यर्थः)

[2] संसारस्य मोहमायादिव्याधिभिः व्याकुल इत्यर्थः।

त्वद्गाथापरिगायनैर्जनगणाः कां कां न यान्ति श्रियं
त्वद्भक्त्या परिवर्जितं द्विजमिमं सद्यस्समुद्धारय ।।६।।

गङ्गातीरविराजितो नरवरे त्वत्स्तोत्रमागायति
वर्षैर्यो द्विजबालकोऽयमधुना त्वत्कीर्तनेष्टः क्वचित्
ध्यायेत्त्वां कवितामुखेन शिवराट्! त्वं मां यमाद् रक्षयेः
पापानि प्रणतार्त्तिहन्! जनकजाप्रीते हराऽऽशुर्मम ।।७।।

रामे चैव शिवे समैकनयनो भूत्वा चरामि स्तुतिं
जानासि त्वमपीह मेऽस्ति भगवान् ध्येयस्सदा शङ्करः
रामश्शङ्करतां प्रयाति मुदितश्शम्भुर्व्रजेद् रामतां
एवं चिन्तनसंयुतस्य हृदयं सर्वत्र सम्मोदते ।।८।।

रामाष्टकं लिखाम्यद्य न जाने केन चोदितः ।
रामो ह्येव शिवो भूत्त्वा रक्षेन्मां भवनाशकः।।

******

१०:२७ रात्रौ , दिनाङ्कः - ०८/०२/२०२०,

******

## ।।। श्रीहनुमदष्टकम् ।।।

*************

शम्भोरंशभवोऽमरोऽमरनुतो मात्रञ्जनायास्सुत:
नानादेववरप्रसन्नहृदयश्श्रीवायुपुत्रो महान्
तस्मान्मारुततुल्यवेगबलवान् देवो दिवाकृत्प्रिय:
सीतारामपदाब्जरेणुमधुपश्श्रीमत्कपीशो वर:।।१।।

बाल्ये यो फलवद्विबुध्य मिहिरं स्वास्ये मुदाऽस्थापयत्
इन्द्रैरावतकुञ्जरस्तु सहसा विभ्राम्य निक्षेपित:
क्रुद्धस्स्वर्गपतिर्हनुं विधिवशाद् वज्रेण तस्याहनत्
वक्रस्तेन हनुस्ततश्च हनुमाँल्लोकेषु सङ्गीयते।।२।।

मैत्रीं कारितवाँश्च यो नगगतश्श्रीरामसुग्रीवयो:
सिन्धूल्लङ्घयिताऽक्षयस्य वधकृल्लङ्कापुरीदाहक:
जग्धुं चैव फलान्यशोकविदितां यो वाटिकां छिन्नवान्
वैदेह्यै च रघूत्तमस्य कुशलं सन्देशवाचं ह्यदात् ।।३।।

युद्धे राक्षसघातकोऽतिभयदो निर्भीकरूपोऽद्भुत:
सम्मानेन च मेघनादविहिते यो ब्रह्मपाशे गत:।
श्रीमल्लक्ष्मणजीवनप्रदभिषक्प्राप्त्यै नगोत्पाटको
धन्यो रामपदारविन्दरमणश्श्रीमद्बलीशो वर:।।४।।

जाग्रद्देव ! कलौ कले: कुकलनं चोत्कीलयेद्वै नृषु
भूतप्रेतपिशाचराक्षसभयान्युत्पाटयेत्स्मर्तृणाम्
लोकालोकसुखप्रदायिभगवद्भक्तिप्रदाग्रांशुमान्
सोऽस्मत्क्लेशहरो हरांशुहनुमान् हन्यादधर्म्यं समम्।।५।।

श्रीरामप्रियसेवक: स्तुतिपरो ज्ञानाग्रगण्यो गुणी
रामाज्ञापरिपालको बुधवरो ध्यानाग्रधन्यो धनी
रामं दर्शितवान् विदीर्य हृदयं य: कञ्चनाभः कपि:
सोऽसौ पञ्चमुखस्तनोतु मनसि श्रीरामभक्तिर्मम ।।६।।

रुष्टो यश्च शनैश्चरं मुहुरहो सन्ताड्य सन्त्यक्तवान्
तेनासौ न कपीशभक्तिमहितान् गृह्णाति भीत: कपे:
श्रीरामप्रियपूजनं कुरु सदा तस्माज्जयार्थं जन!
श्रीमद्दाशरथीशलब्धकृपया सोऽस्मद्भयोद्भञ्जकः।।७।।

यो भीमस्य महाबलप्रजनितं गर्वं क्षणे नष्टवान्
तद्वच्छ्रीबलरामगर्वमथ वा रामप्रियो ध्वस्तवान्
कृष्णास्त्रस्य सुदर्शनस्य गरुडस्यापि स्वशक्त्या कपि:
श्रीमद्रामदयाबलात्स बलवानस्मद्विपन्नाशक:।।८।।

ध्यात्त्वा रमेशचरितं हरिलोकनेयम्
स्मृत्त्वा कपीशचरितं मुनिवृन्दगेयम्
जन्मोत्सवे हनुमतेऽद्य समर्पयामि
कप्यष्टकेन कपिमद्य समर्चयामि।।

******

## ।। एकादशीमाहात्म्याष्टकम् ।।

*************

वेदान् विदन्तु न च भूरि तपश्चरन्तु
क्लिष्टक्रिया उत जना मुहुरुत्सृजन्तु
यज्ञाननेकफलदान् यदि नाचरन्तु
एकादशीव्रतमिमं ध्रुवमाचरन्तु।।१।।

विद्यां च मोक्षकरिणीं यदि नाप्नुवन्तु
सेवां न चेद्गुरुजनस्य चरन्तु दैवात्

नानासुरार्चनविधिं न विदन्तु कामं
एकादशीव्रतदिनेऽनशनं चरन्तु।।२।।

पन्थान एवमधिका हरिलोकमेतुं
धर्म्याणि राज्यविभवादिसुखं समेतुं
किन्त्वल्पकालफलदं सुखसाधितं तम्
एकादशीव्रतमहो सुजनाश्चरन्तु।।३।।

श्रीमद्धिमांशुपरिशोभितमस्तकस्य
श्रीवक्रतुण्डगणपस्य मयूरकेतो:
उल्लूककेतुपतिशेषशयस्य लोकात्
जोघुष्यते व्रतमिमं सकलाश्चरन्तु।।४।।

धावन्तु चापि भुवि, खे क्वचिदुड्डयन्तु
लब्धुं समीप्सितसुखं कचरा: भवन्तु
नानानियोजनविधीनपि चोद्धरन्तु
विष्णुव्रताद्विरहिता: न शमं व्रजन्तु।।५।।

गोविप्रदेवतटिनीतुलसीकथाश्च
गोविन्दनामजपनं च पुराणचर्चा
वैकुण्ठधामगमनस्य सुखेन पन्था:
एकादशीहरिचरित्रसुधानिपानम्।।६।।

स्वर्णादिदानकरणे यदि नास्ति शक्ति:
श्रौतादिकर्मचरणे नहि चेत्सुरक्ति:
ध्यात्वा हरिं तु तुलसीतरुसन्निकाशे

मोक्षप्रदव्रतमिमं मुहुराचरन्तु।।७।।

एकादशैरपि मता शिवरूपरुद्रैः
एकादशैर्द्विजजनैर्जनयेच्च कामान्
एकादशेन्द्रियगणान् परिशोधयेद्या
एकादशी भुवि समस्तजनैस्सुसेव्या ।।८।।

पुण्यैः कैश्चिन्मयाऽज्ञातैर्हरिप्रेरणयाऽधुना ।
विष्णुव्रतस्य माहात्म्यं सुश्लोकैरष्टभिः कृतम् ।।
******

## ।। श्रीविश्वनाथाष्टकम् ।।

*************

हे विश्वनाथ! करुणामृतसेचकस्त्वं
मादृग्जनाँश्च परिपालय कामशत्रो!
त्वद्वीक्षणेन मम सर्वशुभानि नूनं
जायन्त इत्यहमहोऽस्मि सदैव हृष्टः ।।१।।

हे बोद्धृचिन्तकजनैः परिचिन्तितस्त्वं
हे हेममालिसुरराडभिपूज्यदेव!
हेमन्तकान्त शिवकान्त नगाधिशायिन्!
वाराणसीपुरनिवास! नमो नमस्ते ।।२।।

त्वं शाब्दिकैश्श्रुतिधरैः कविभिस्समर्च्यः

काशीपुरे शिवहृदा विचरद्भिरेवम्
भोः विश्वपालकगुरो! शृणु मे समीहां
काशीरहो नरवरो हृदि भावयामि ।।३।।

त्वत्ताण्डवेन पृथिवीजलवायुतेजः-
खानीति खस्थपरिमण्डलकानि चैवम् ।
यान्तीव दौःस्थ्यपदवीं पुनरन्तरीक्षे
ब्रह्माण्डदाहकशिवाय नमो नमस्ते ।।४।।

त्वन्नाथ! नाथयसि वा जगतस्समस्तान्-
व्यस्तान्प्रशस्तपुरुषान् जगदीशरक्तान् ।
यानि[3] क्व चिन्तनविहीन इवास्मि शूलिन्!
काशीपुरेऽपि नहि पश्यति मां च कश्चित् ।।५।।

या ते पुरी शिव! कथं क्षमसे कुधीँस्त्वं
काश्यां सदा निवसतो कुहृदो द्विजान् वा ।
व्यर्थं गुरोऽप्यभिमतं परियान्ति ते वा
मन्यौ शिवस्य पतिताः नरकं व्रजन्ति ।।६।।

हे शुभ्रलोकवसते! च सतां सुरक्षिन्!
शुद्धप्रबुद्धहृदयाच्युतचित्स्वरूप!
चन्द्रार्कवह्निनयन! ध्वनिवर्तिसूक्ष्मा-
खण्डस्वरप्रतिभवोद्धवलभ्यशम्भो ।।७।।

---

[3] गच्छानीत्यर्थः ।

काशीप्रियोऽपि वससि प्रतिलोकभाण्डं
लोकाद्विहीनवपुषामिव भासि भासः ।
कुत्रापि नैव वसताच्छिव भक्तचित्ते
श्रद्धायुतस्य,कपटाद्रहितस्य नूनम् ।।८।।

******

विश्वनाथं समाचिन्त्य काशीपुरं विचार्य च ।
भावैः मनसि सञ्जातैः पादयोरर्प्यतेऽष्टकम् ।।९।।

******

## ||| श्रीमहाकालाष्टकम् |||

*************

श्मशाने वसन्तं पिशाचावृतं तं सदा डाकिनीयक्षभूतावृतं च ।
अहोऽमङ्गलत्त्वेन संलोक्यमानं नृणां मङ्गलार्थं महाकालमीडे ।।
मुदैवोज्जयिन्यां वसन्तं वसन्तं जनैरर्च्यमानं विधानप्रधानम् ।
प्रमाणानुमानोपमानातिरिक्तं विविक्तं जलैस्सिक्तशक्तं समीडे ।।१।।

क्वचिज्जङ्गले मङ्गलत्त्वं दधानं श्रियाऽमङ्गलं मङ्गलत्त्वं दधानम्
सुधाधानमाधानमूलं त्रिशूलं महाकालमीशं भजे ह्युज्जयिन्याम्
।।२।।
समस्यासमाधानमुद्यानसक्तं पुराणोक्तवीथ्यां भ्रमन्तं भ्रमोद्धम् ।
विचारैकसञ्चारसंसारमूलं दुकूलैर्विहीनं भजे सौख्यकूलम् ।।३।।

समीपोवनीपस्सुरूपोऽप्यरूपो सुगोप्योऽप्यगोप्यो न हेमो न रौप्यः

समे ब्रह्मभाण्डे भ्रमेद्यो वसेद्यो महाकालमात्मन्यहो भावयामः
।।४।।
स मृत्युस्स जन्मापि बाल्यो युवत्त्वं
जरत्त्वं गतोऽसौ शिवो वै विलक्ष्यः ।
सदारोग्यदो भक्तिचित्तस्य यो वै
स मृत्युञ्जयो गीयते भूतनाथः ।।५।।

अनाथोऽप्यनाथैकनाथस्सुगाथोऽप्यगाथो वृथाऽथ भ्रमेन्न भ्रमे ना
स्वकं बाध्यभावं विनश्य प्रसादैश्शिवस्य श्रिया श्रीमहाकाल ईड्यः
।।६।।
स भस्माङ्गरागोऽप्यरागस्सरागो विरागो विभागैर्विभाति श्रुताद्ये
स सन्मात्रचिन्मात्र आनन्दरूपो महाकाल आख्यस्समैर्वन्द्यविभ्राट्
।।७।।
भवत्रं शिवं प्रेतमित्रं विचित्रं सदित्रप्रियं दुःखदारोर्लवित्रम् ।
पवित्रं जगत्त्रं जगद्धं विपद्धं महाकालमुद्धारकृल्लोकमीहे ।।८।।
महाकालाष्टकं चैतद्रात्रौ भक्त्या समाहितः ।
करोमीशदयाकाङ्क्षी सौभाग्यं नो हरश्चरेत् ।।९।।
******

लेखनसमयो दिनाङ्कश्च – १०.५० रात्रौ , १८-०७-२०१९,
बृहस्पतिवासरे, गाजियाबादस्थे गृहे।
******

# ॥ श्रीबलरामस्तुतिः ॥

*****

हे कृष्णाग्रज! शेषनागबलराट्! हे दिव्यलोकाधिप!
हे नारायणसौख्यदायिशयन! श्रीमद्गुरोस्सुप्रिय!
हे पृथ्वीधरण! प्रभो! हरिनिभाभासैस्समुद्भासित!
हे हे द्वापरमल्लयुद्धकरण! श्रीमद्बलिंस्ते नमः।।१।।

हे कृष्णस्य पदं पदं प्रतिपदं साहाय्यसन्तत्पर!
हे नानासुरघातका!ऽतिभयद!न्यायप्रिया!ऽन्यायहृत्!
त्वं दुर्योधनभीमशिक्षणरतो हे विप्रगोरक्षक!
मद्बुद्धिं कुरु सत्यधर्मशरणे सङ्कर्षणऽऽकर्षण!!२!!

धर्मस्थापनतत्परश्शिवकरश्शम्भुप्रियश्श्रीयुतस्-
त्वं नानाविधयुद्धकौशलपरस्त्वं चासि नीलाम्बरस्-
त्वं दैन्यादिविदारकोऽतिविमलस्त्वं सर्वसम्पालकस्-
त्वं हर्यङ्ग इवैव भासि बलराट्! त्वं मेऽसि पूज्यस्सदा।।३।।

हे मेघद्युतिवस्त्रवेष्टिततनुर्हे हेममालिन्! प्रभो!
त्वम्पीताम्बरसुप्रियो मम शुभं धत्से व्रजे भ्राम्यसि
वैशम्पायन-सुप्रसन्न-वरदस्त्वं हेममाली महान्
त्वं सर्वं श्रुतिशास्त्र-तत्त्वमपि भो: भाषेस्सहस्रै: फणै:।।४।।

त्वं दिव्यश्रुति-वर्णि-तत्त्व-शरणस्त्वं यज्ञसंरक्षक:
त्वं सूर्यादि-जगत्प्रकाश-पदवी-लोकैस्समालोकित:
हे रामानुज-रूप-लक्ष्मणगुरो! त्रेतायुगे वर्तित!
हे फुङ्कार-निदग्ध-लोक! तव वै भक्तौ वयं संरता:।।५।।

## ॥ श्रीबाबागुर्वष्टकम् ॥

************

समत्त्वैकदृष्टिं श्रुतिस्मार्तहृष्टिं
धृतोद्वेत्रयष्टिं सुखोत्सारिसृष्टिं
महाशास्त्रवृष्टिं विदां तं समष्टिं
शिवोत्कृष्टिबाबागुरुं पूजयामः ।।१।।

मनस्विप्रकाशं तपस्विप्रकाशं
वनस्थप्रकाशं गृहस्थप्रभासं
घटाकाशविज्ञं मठाकाशविज्ञं
मठाधीशपूज्यं नुमस्सर्वपूज्यम् ।।२।।

सतामेकहासं जगद्विज्ञभासं
धृतौन्नत्यमार्गप्रचोदप्रकाशं
सुभाषाग्रगण्यं हितं निम्बवाचं
महादानहस्तप्रशस्तं नमामः ।।३।।

सदा जाह्नवीतोयसम्मज्जनाग्रं
हृदा शिष्यलोकप्रियं सज्जनाग्रं
मुदा शम्भुलोकश्रियं पूजनाग्रं
नुमस्तं हि बाबागुरुं सद्बुधाग्रम् ।।४।।

शिवापाठशीलं सुरार्चाप्रमग्नं
दिवापाठपाठिप्रियं कर्मलग्नं
शुभज्ञानभक्तिश्रितं भग्नविघ्नं

अघघ्नं गुरुं गौरवाढ्यं भजामः ।।५।।

सदाद्वैतवेदान्तविज्ञानयुक्तं
यशःकामिनीकञ्चनाशाविमुक्तं

गवां ब्राह्मणानां च कल्याणसक्तं
तपोवाचमर्थप्रदं भावयामः ।।६।।

कवीनां गुरुं भावनाढ्यं भवाढ्यं
सुधीनां गुरुं साधनाढ्यं सुधाढ्यं
मुनीनां गुरुं चिन्तनाढ्यं चिदाढ्यं
नृणां मौढ्यहं सद्गुरुं भावयामः ।।७।।

जलानामिव श्रौततृप्त्यैकहेतुं
फलानामिव श्रीरसप्राप्तिसेतुं
मखानामिव प्राह धर्मैककेतुं
नुमस्तं सुविद्यां च सौख्यं समेतुम् ।।८।।

विद्यायाः यल्लवः कश्चिन्मय्यत्र पल्लवायते ।
तद्दयामृतमद्यापि मत्काव्यैस्सल्लकायते ।।९।।

लेखनसमयो - २०१९

******

# ॥ श्रीपचौर्यष्टकम् ॥

************

सदैवाधिवक्तृप्रवक्तृप्रभृत्यै-
र्द्विजैर्न्यायधीशैस्सुधीभिस्सुवैद्यैः
सदा शाब्दिकैर्मान्यवृन्दैस्सुमान्यो
नरौरास्थले श्रीपचौरी सुभाति ॥१॥

पुराणं च शास्त्रं श्रुतिं वेत्ति सोऽसौ
तथाऽऽचारवान्नैव शास्त्रं जहाति
जराजीर्णकायो न शास्त्रेण जीर्णः
प्रवीणः प्रधीः देवदूतो विभाति ॥२॥

नरैर्दृश्यते तस्य शैली विशिष्टा
समैश्श्रूयते तद्गिरा चाभिरामा
कदाचिन्मनोमोदधर्ता पचौरी
नवव्याख्यरूपं वदेत्सर्वशास्त्रम् ॥३॥

स आङ्ग्लीयभाषाप्रवक्ता विशिष्टस्-
स गीर्वाणवाणीं सदा धार्यमाणः
स्वराष्ट्रस्य भाषासमुद्रस्य तर्ता-
स साधारणीभूय तिष्ठेत्स धन्यः ॥४॥

प्रभाते पिबन् काङ्गड़ीत्युष्णपेयं

 ISBN – 978-81-943558-3-0

हरिस्तोत्रमुच्चस्वरैश्चैव गायन्
क्षिपन् भोजने यस्तुलस्याश्च पत्रं
करोत्यागतैस्सभ्यवैशैस्सुचर्चाम् ।।५।।

स देवज्ञरूपैर्जनैः पूज्यमानो-
ऽथ विद्यायुतत्त्वेन विद्वज्जनैश्च
य आस्ये सुहास्येन सर्वप्रियोऽस्ति
प्रियस्सुक्रियस्सुश्रिया सौम्यरूपः।।६।।

गृहेषु प्रयात्येष नित्यं जनानां
प्रियाणां सुभोज्यानि धन्यीकरोति
नृणामुत्सुकानां भविष्यं विवक्ति
समाहूतरूपो मुदा जन्मपत्रैः।।७।।

जनाः विस्मयं यान्ति यस्य प्रकृष्टां
विलोक्य स्मृतिं सन्मतिञ्च द्युतिञ्च
विचित्रस्स विद्वान् भुवीहावतीर्य
प्रभाति प्रभाभिः पराभिस्सदैव ।।८।।

फलश्रुतिः-

पठेच्छ्रद्धया ध्यायमानः पचौरीं
निशान्ते दिनान्ते दिनार्धे पुमान् यो
द्विजस्सोऽश्नुते दैवविद्यां नवीनां
समाख्यां च काव्यस्य वाचां विलासः।।९।।

अभावो न तस्मै भवेद्भोजनस्य
जनायापि योऽर्थं विचार्य स्तवस्य
पचौर्यष्टकं श्रीपचौरीगुरोर्य-
श्शृणोत्यापदां सन्निपातो विनष्टि ।।१०।।

चरित्रं न तस्याऽष्टभिर्वक्तुमर्ह-
स्समर्थस्तथाप्यर्थवान् वक्तुमर्हो
मदीयं सुभावं विलोक्य प्रधीर्वै
ददातु श्रियं मोदमाप्तुञ्च विद्याम् ।।११।।

## ।। श्रीमत्र्यम्बकमहाराजपञ्चकम् ।।

*************

यश्चैकं परिवेत्ति तत्त्वमथवा भूतेषु लोकेष्वपि
एकस्मिन् हरिशुद्धनामचरिते सम्मज्जितो यश्च वै
एकस्मै परिजीवतीति विबुधश्शास्त्राय शैवाय च
एकस्त्र्यम्बकभक्तिभाग् यतिरहो गोपालदत्तो द्विजः।।१।।

द्वावेतौ पुरुषौ समस्तभुवने सूर्यस्य सम्भेदिनौ,
द्वे चैते हरिशम्भुनामचरिते मोक्षप्रदे भोगदे
द्वाभ्यां सौख्यमवाप्नुते सुपुरुषश्श्रीविद्ययाऽविद्यया,

द्वित्त्वेनापि सरन्ति शाब्दिकजनाः जानात्यसौ त्र्यम्बकः ।।२।।

त्रीन् वेदानथ भक्तिभिश्च पठति व्याकृत्पथे संरतः,
त्रींल्लोकानपि शास्त्रबोधितदृशा संलोकते सौख्यधीः
त्रीन् कालान् परिवक्ति दैवदिशया हस्तस्य रेखादिभिः
त्रैलोक्ये त्रिपुरारिदेवदयया यस्त्रायते त्र्यम्बकः ।।३।।

यो वाऽलौकिकलौकिकेषु चतुरश्शास्त्रस्य चोद्भाषणैः
यो धर्मस्य सदैव दिक्षु तनुते कीर्तिञ्चमत्कारिताम्
यो वै पर्वतगोष्ठचत्त्वरगतः काषायधृच्चीयते[4]
चञ्चच्चन्द्रधरे, चतुर्मुखमखे, चेकीयते श्रद्धया ।।४।।

यो वै पञ्चकसञ्चकोऽञ्चति बुधान् पञ्चेषुशत्रौ रतो
यो वा पञ्चकवर्जितञ्च निखिलं साध्नोति यज्ञादिकम्
यः पञ्चाङ्गविशेषबोधलसितो यः पञ्चतन्त्रार्थदः,
श्रीमत्पञ्चमुखेऽपि भक्तिनिभृतोऽहो त्र्यम्बके त्र्यम्बकः ।।५।।

पञ्चकानि विरच्यन्ते विदुषाञ्च महात्मनाम्।
येन,त्र्यम्बकवर्येण तस्याऽत्र पञ्चकं कृतम्।।

---

[4] कषायेन भवः काषायः कषायरागयुक्तवस्त्रवाची । काषायं धरति धृतवान् वा काषायधृत् स्वामिवेशधर इत्यर्थः । चीयते – जनैः निश्चीयत इति भावः ।

******

# ॥ विविधदेवस्तुतिः ॥

************

## श्रीगणेशस्तुतिः

******

श्रीमच्छङ्करपुत्र एष भगवान् गौरीसुतश्श्रीप्रदः
हस्त्यास्यः प्रथमार्चितश्शुभकरो यश्चिन्तितं यच्छति
ध्यात्त्वा यस्य च नाम नश्यति महाविघ्नो द्रुतं निश्चितम्
तं गीर्वाणगिरार्चितं गणगुरुं गुण्यं गणेशं भजे ।।१।।

## सूर्यस्तुतिः

******

यो वै सर्वतमो हरेद् द्युतिकरोऽभीष्टं द्रुतं यच्छति
तेजस्त्वं प्रददाति यश्च पुरुषायाऽर्थं शिवं जीवनं
नानाव्याधिहरो हरिद्धयरथश्श्रीदायिदेवोऽर्चिमान्
लोकादर्शकचक्षुषामिव महाचक्षुस्स देवो मतः।।२।।

## ।।श्रीशिवस्तुतिः।।

******

कैलासस्थयतिं त्रिनेत्रमरिहं गौरीशमीशं विभुं
सर्पाबद्धजटाधरं फणिगलं श्रीनीलकण्ठं प्रभुं
भक्तानां द्रुतमापदाविहननं चाशुप्रसन्नं शिवं
मुक्तं मुक्तिकरं प्रसन्नवदनं मृत्युञ्जयं भावये ।।४।।

## ।।श्रीकृष्णस्तुतिः।।

******

राधाप्रेमयुतं हरिं स्मितमुखं सर्वस्य सम्पालकं
गोविप्रप्रियमच्युतं सुरवरं गोपाङ्गनावल्लभं
वंशीनादरतं सदा मधुवने वृन्दावने वासिनं
सत्यप्रीतिपथप्रदर्शकगुरुं श्रीवासुदेवं भजे ।।६।।

।।श्रीराधास्तुतिः।।

******

या वै कृष्णरता प्रिया च यमुनातीरे भ्रमन्ती मुदा
साक्षान्मुक्तिकरी समस्तजगतो याऽऽद्या च शक्तिर्मता
सा वै श्रीवृषभानुजा सुखकरी सौख्यं द्रुतं यच्छति
यो ध्यायेदथ राधिकां स मनुजो नायाति गर्भे पुनः ।।७।।

।।धेनु-स्तुतिः।।

******

धेनुस्तीर्थमयी च पुण्यजननी विष्णुप्रियाऽऽरोग्यदा
अस्यास्स्पर्शनदर्शनादिकमहो क्लेशापहं निश्चितम्
धेनुर्यत्र सुखेन तिष्ठति सदा श्रीर्वर्धते तत्र वै
धेनुर्मातृसमा ममास्तु शिवदा धेनुश्च मे कामदा।।

।।यमुनास्तुतिः।।

******

कालिन्दी शुभदा च कृष्णरमणी वृन्दावने वाहिनी
पापानामपनोदिनी सुमनसां चित्तेषु या तिष्ठति
स्नात्त्वा यत्र हरेर्गृहं व्रजति वै निष्कल्मषो मानुषो

 ISBN – 978-81-943558-3-0

नौमि श्रीयमुनां समृद्धिकरणीं भक्तिस्वरूपामहम्।।

।।भारतमातृ-स्तुति:।।

----------

काशीश्रीमथुरापुरीविलसिताऽयोध्यापुरीराजिता
गङ्गागोगणनाथगायकमहाभक्तप्रसक्ता शिवा
विद्वद्वीरकवीन्द्रशिल्पिजननी श्रीरामकृष्णप्रसू:
माता भारतभूमिरच्युतकथाधन्या प्रणम्या सदा ।।

।। गङ्गास्तुति:।।

******

यस्या दर्शनमेव सौख्यकरणं स्नानं च पुण्यप्रदं
यां स्मृत्त्वा पुनरेति नैव जगति श्रीर्वर्धते सेवनात्
या शोकापहरी सदा शुभकरी दिव्यामृता निर्मला
विष्णवङ्गा च हरोत्तमाङ्गसलिला गङ्गा जलाङ्गा शिवा ।।
[०९-५६ पूर्वाह्ने, दिनाङ्कः - ०४-११-२०१९]

# द्वितीयपल्लवः
# जन्मदिनशुभैषाकाव्यानि

## ॥ ललितपन्तोला-जनिदिनशुभैषणम् ॥

************

नृत्योल्लासरतश्शुभार्जनरतो योषिद्रतो रात्रिषु
हास्याकाशरतश्शिवार्चनरतश्शिक्षारतश्चान्वहः
विद्यादानरतो द्विजार्चनरतो द्वेषादिमुक्तस्सदा[5]
पन्तोला ललितो भुवीह शरदो जीवेच्छतं कामये ॥१॥

मित्रप्रेमरतो धनार्जनरतो धन्यार्थिजीव्यङ्गमी
नानालापकलाकलापनिरतस्सङ्गीतमोदङ्गमी
कालाकालपरोपकारसुरतस्सौख्यैकमार्गङ्गमी
पन्तोला ललितो भुवि व्रतरतो जीवेच्छतं कामये ॥२॥

यश्चैव प्रकृतिप्रियो जनिभुवस्स्मर्ता स्मरार्यर्चको
यश्चैवं सुकृतिप्रियश्शिवभुवस्स्मर्ता सुखार्थोऽपि वा
ग्रामप्रेमपरोऽमरप्रियधराप्राप्तोत्तराखण्डजः
पन्तोला ललितो हिमालयगतो जीवेच्छतं कामये ॥३॥

---

5 भूत्वेति पदं सर्वत्र विशेषणानन्तरमध्याहार्यम् ।

 ISBN – 978-81-943558-3-0

**बिल्वैर्वा करवीरपुष्पनिचयैस्सम्पूजयेच्छङ्करं**
**दूर्वाभिर्गणनाथमाशुफलदं मोदप्रदं मोदकै:**
**दुर्गां दुर्गतिदु:खनाशकरणीं पाठप्रियां श्रद्धया**
**पन्तोला सुरभक्तिसक्तिमनसा जीवेच्छतं कामये ।।४।।**

**शृङ्गेर्यां वा पिपठिषुनरान् पाठयेद्यश्शुभाश:**
**भोपालं वा जिगमिषुजनान् प्रापयेत्प्रेरणाश:**
**शिक्षां वा यो विविदिषुबुधान् बोधयेद्बोधनाश:**
**पन्तोला ! त्वं पपिपुरपरस्तेज एधस्व जीव[6] ।।५।।**

**जनित्त्वं जानकीजानिस्सफलत्त्वं नयेन्नृणाम् ।**
**कवेर्वा ललितस्यापि लालित्यं वर्धयेत्प्रभु: ।।[7]**

---

[6] पपिपुरं - चन्द्रलोक , एव परश्श्रेष्ठो यस्य स पपिपुरपर:, पन्तोला त्वं पपिपुरपरो भवेस्तथा स्वतेजश्च वर्धस्व , जीव चेत्यर्थ:।

[7] एतत्काव्यं विलोक्य दामोदर-कविनोक्तम् - सुमधुरं मधुरञ्जकसत्पद-प्रकरचारुतरं कवनं तव । जनयतीह मुदं कुमुदप्रियामृतरुचामिव जालमतीव नः।। तदा हिमांशुनोक्तम् -
गुणिजनो हि विवेत्ति गुणं सदा ,न च परोऽगुण एवमियाच्च तं, कविकुलक्रमविक्रमसत्कवे!
कविसुरागरतो जयताद्भवान् ।।
अपि परे परदूषणतत्परा ,मुनिनरे खरदूषणवज्ज्वरा, कविजनं सुजनं परिभाव्य ते,
निजबुधत्त्वनिदर्शनकाङ्क्षिण:।।
अयमगार्चकबोद्धृपदार्चक:, सुहृदयैश्च हिमांशुरितीरित:, कविसभासु न यद्यपि याम्यहं,
निजगृहे सुरवाक्शरण: कवे!
नहि जगत्यरविन्दमुखी जनै: ,कथमिवापि युवत्त्वगतैस्तथा, मदनपाशगतै: परिहीयते,
कविसुधा विरलैरिह पीयते।।
क्व पुरुषस्य भवेच्छुभदर्शिता, विषयपाशगतस्य नयार्थता, भुवि कथञ्चिदिवामयसौख्यगै:,
शिवमहो न च लभ्यत ऐहिकम्।।
एतद्वीक्ष्य दामोदर-कविना पुनः प्रशंसामुखेनोक्तम् - कविकुलनीरधिचन्द्रं
सूरिजनाम्भोजमालिकासुरम् अज्ञजनताभूमिं वन्दे सत्काव्यकारमिह हिमांशुम् ।

 ISBN – 978-81-943558-3-0

******

## ॥ शिवानुरागिणे जनिदिनशुभार्थनम् ॥

************

शिवानुरागिन् शिवसेवकस्त्वं
श्रियां प्रियश्श्रौतधरानुरागिन्
सुखं सुमाङ्गल्यकरं त्वदीयं
हरिश्रितं जन्मदिनं भवेद्वै ।।१।।
अहो नरौरानगरस्थगङ्गा-तटे तपस्याऽऽचरिता त्वया वै
तस्य प्रभावात्तव वाचि नूनं विलक्ष्यते किञ्चिदपूर्वतेजः ।।२।।

त्वं राष्ट्रभक्त्यै बत विप्रभक्त्यै
द्विजैक्यशक्त्यै च शिवैकरक्त्यै
लग्नोऽसि मग्नोऽस्यपि तत्परोऽसि
त्रिलोकिनाथोऽसि शिवानुरागिन्।।३।।

कृष्णालये वाऽथ शिवालयेऽपि रामालये रम्यसुमालयेऽपि
मखालये वाऽपि सुखालयेऽपि सर्वत्र हर्षैश्शुभताम्बिभर्षि।।४।।

शास्त्राऽर्चनासम्भृतलोकलिप्सा
नैवाधिकाऽर्थार्जनचिन्तनं च
एतद्धि लोकेऽक्षरदैकधाम
कल्याणगामिन् भव हे त्रिलोकिन् ।।५।।

******

## ॥ श्रीबण्टवे जनिदिनशिवार्थना ॥

*************

किं वा तेऽद्य ददानि किं च करवाणीति श्रयेन्नो मनः
स्त्रुघ्नस्थोऽसि तथापि चित्तफलके साक्षादिवोपस्थितो
भावासारितयैव जन्मदिवसे शैवार्थकामोऽस्मि ते
बण्टो! जीव शतं चिरं सुखयुतं शम्भ्वर्चनामङ्गलम् ॥१॥

अद्यैवापि दिनानि यानि विगतानीवेह चाक्ष्णोः पुरः
आयातानि विलोक्य जन्मदिवसं त्वल्लोकयात्रादिकं
त्वं वा तत्र सुहृद्भृते नरवरे हास्यादिवार्तारतो
भोज्याऽऽमन्त्रणगः कथादिषु रतश्श्रीसत्यनारायणे॥२॥

यत्रैवं च तरन्त्यहोऽथ युगपच्छात्राः द्रुतं कौशलैः
धावित्त्वा च शिवालयस्य शिखरात् कूर्दन्ति सूच्चाज्जले
सर्वे ते नटवत्कलाविलसिताः त्वं तेषु कूर्दादिभिः
गङ्गामातृजले मुदा नरवरे बालैरिवाक्रीडयः॥३॥

सत्यं चाद्य वदामि ते , न तदिव प्राप्तः प्रमोदः क्वचित्
सर्वैश्छात्रसुजीवनं हि पुरुषैर्विस्मर्तुमर्हो न वै
बण्टो ! यद्यपि कर्मकाण्डनिरतो , किं नैषि विद्वत्स्थलीं
यत्स्यात्तत् , भवताच्छुभं जनिदिनं स्वायुष्यदं सौख्यदम् ॥४॥

भव ! भवेच्छिवदं द्विजजन्यहः
श्रुतिनिघण्टुकबण्टुजनस्य वा
नरवरे रवकृत्तवभक्तिकृत्
प्रणतिपातपरश्शिवरात्रिके।।५।।

******

## ।। श्रीमन्महेशभारद्वाजाय जनिदिनशुभालयः ।।

*************

नृत्योल्लाससमारतानि मनुजैर्हृष्टैर्भृतानीति वा
देवीवागतिरम्यलोकनिसृतानीवातिहृद्यानि वा
गङ्गातीरनिवासहासतरणोत्खेलानि नैवं पुनः
प्राप्यन्तेऽकृतपौरुषैर्न पुरुषैश्श्रीमन्महेशार्चया।।१।।

शृणु महेश! शिवार्चनसंरत
कलिरसौ द्विजदुःखद उच्यते
निखिलधर्मविनाशयुगेऽधुना
सरति चाल्पजनश्शुभकर्मणा।।२।।

क्वचिद्घण्टानादः क्वचिदथ सुमानां च चयनं
क्वचिद्ध्यायामानां गतिरपि जनैर्लोक्यत इह
प्रभाते गायन्तो मधुरपदगङ्गालहरिकां
समे विद्वच्छात्राः भजननिरताः शुद्धमनसा ।।३।।

छात्रे काले गुरुकुलतपश्शास्त्रचर्याऽस्मदीया
वृक्षारोहो विततभुवि वोद्धावनं रावपूर्णं
वर्षाम्भोभिर्मुदितहृदयैर्धातुकृत्तिङ्सुपाठ:
एतत्सर्वं मनसि मम चोट्टङ्कितं चाऽधुनापि ।।४।।

श्रीमँस्तुभ्यं विगतदिवसानां शुभं स्मारयामि
बाबाख्यानां विपुलतपसां मङ्गलं श्रावयामि
हारित्यानां निलयमिव वा ते द्रुतं कल्पयामि
पौष्पीगाथां रमणसुखतां काङ्क्षितां ग्रन्थयामि।।६।।

विद्वन् ! भवान्नरवरे शिवभक्तिपूर्णो-
ऽहो वृद्धकेशिसदनस्थविभातरूप:
श्रीसाङ्गवेदभवने निजशुद्धकक्षे
मित्रैस्सह प्रकुरुते स्म च चायपानम् ।।७।।

न वाऽऽलस्यरूपश्च चैतन्यरूपो
विचार्यैव कार्याणि कुर्वन् प्रभायात्
नरौरावने वाऽप्यहो कर्णवासे
भ्रमन् भ्रामरीं वेत्तुकामोऽप्यदर्शि।।८।।

क्वचित्सुभोज्यभक्षणाय यान्ति विप्रबालका:
क्वचिन्मखादिहेतवे सुदक्षिणाद्यवाप्तये

सदाग्रगण्य एव विप्रकर्मसंरतेष्वहो
महेश! चेशसिञ्चक! प्रभाकरार्चकोऽस्यपि।।९।।

वेदपाठैश्च वा शब्दपाठैश्च वा गद्यपद्यादिपाठैस्समान् रंजयन्
साङ्गवेदद्विजैर्मानितो यस्सदा श्रीमहेशाभिधो भाति दुर्गार्चकः
।।१०।।

महेशप्रकाशैः प्रकाशं गतो यः
महेशेषुशक्त्याश्रयिवन्दको यः
महाशो महाशो न वाऽसौ महेशो
दिनेशप्रसन्नश्चिरं जीव धर्मे ।।११।।

महार्त्ते महादीनहीने दयार्द्रो महापद्विमग्नोऽपि धैर्यं न मुञ्चेत्
महाकर्मकाण्डी महाधर्मभाण्डी विमण्डी शिवाण्डी शुभाण्डी सुजीव
।।१२।।

तेषां जनिर्वा सफला भवेद्वै
ये कर्मलोके नहि यान्त्यधर्मं
शिवं न जीवेषु दयां त्यजन्ति
तद्वन्महेशश्चिरमेहि सौख्यम् ।।१३।।

हरिरुद्रशिवासुखगामिजनाः
पदसारितयाऽक्षरधामशिवाः
महतामथ मङ्गलपद्धतिगाः
समयन्ति न शोकतलं सुजनाः ।।१४।।

भारद्वाजमहेशस्य सज्जन्मदिवसेऽधुना ।
पद्यपुष्पलता चैषा चार्प्यते तत्करे मया ।।१५।।

******

## ।। डॉ.रीतेशजोशिने जनिदिनशुभैषा ।।

*************

प्रातो हेमीभवन्त्यो दिनकरकिरणैर्याः हिमाढ्याः हिमान्य:
आकाशस्पर्शिवृक्षा नगशिखरघनस्पर्धिनो लम्बताद्यै:
उच्चैर्नीच्चैश्च भूभिर्भुवनगतविभिन्नस्थितिर्बोध्यते वै
रम्या दैवीच्छटेयं घटयति किमपि प्राकृतप्रेम चित्ते।।१।।

तत्र त्वं वै प्रजातोऽखिलसुरगुरो: प्रीतिलोके द्विजार्थे
पितृभ्यां तेऽप्यकारि श्रुतिनयनसरैर्नाम रीतेशजोशी
एवं त्वज्जीवनस्योन्नतियुगगुणा रीतिरुत्पादिता वा
देवीवाग्धामशिक्षागतविविधसुलक्ष्यं समासादितं वा ।।२।।

विद्यावारिध्यवाप्तिं त्वमपि निजमनश्शान्तिकोशे निधाय
भोपालं स्वप्रधामाम्बुसरनगरमाप्यासवान् संस्कृताढ्ये
संस्थाने विज्ञविप्रावृतनितिनबुधोद्बोधितश्शोधमार्गे
सारल्यैस्तेन तीर्णाऽब्धिरिव दुरवगा शिक्षया वाक्तरस्त्वम्[8] ।।३।।

---

[8] वाचा तरतीति वाक्तरः, (डॉक्टर इत्यस्यार्थे वाक्तर इति लिखितम् ) ।

मिश्रौ कौस्तुभराहुलौ हि सुहृदौ पूजाऽखिलेशद्वयं
सन्तोषोऽनुपमो नवीन इति यश्चायप्रियो मित्रमुत्
पन्तोला भुवनो भवेच्च विजयः कश्चिद्द्विजल्वाणकः
रीतेशो जुगलोऽमितद्वयमुत श्रीओमशैलेन्द्रकौ ।।४।।

मौर्यश्चाभिनयोऽतुलो भगवतो गाथां सुगायेच्च यः
विष्प्रज्ञा कमला सुखम्प्रति गता पण्डाऽथवा नन्दिनी
सी.यम्-भ्रातृवरस्तथा प्रभवताद् आशीषको दीक्षितो
ब्रह्मानन्दक-मिश्रवेदनयनाध्येताऽपरश्शोधकः ।।५।।

धर्मेन्द्रोऽप्यरुणो भवेदथ जनश्श्रीमाङ्गिलालोऽपि वा
योगेशो हरिओम एवमपि वै चौबेदिनेशोऽथवा
चन्द्रेशो जयराम इत्यभिहितः , श्रीसारिका शैलजा
सङ्गीता च हिमांशुगौड इति ते भोपालशोधार्थिनः ।।६।।

इत्येतत्तव जन्मकालदिवसे चोद्बोधयामीह ते
येन स्मारणमुद्भवेन्मनसि वोज्जायेत तात्कालिकी
कल्पा काचिदथेष्टरूपघटना दुस्स्वप्नवार्ताशमः
सम्पूर्णं मम भारतं निजपरौ मन्ये क्वचिन्नाऽप्यहम्।।७।।

मध्यदेशोऽथवा चोत्तराखण्डकः उत्तरीयो भवेद्दाक्षिणात्योऽपि वा
अङ्गबङ्गौ कलिङ्गोऽथवा गुर्जरः सर्वथा भारतं सर्वरूपैस्स्थितम्

।।८।।

यत्र कुत्रापि गन्तुं वयं शक्नुमो यच्च तच्चापि कर्तुं स्वतन्त्रा इह
वक्तुमिष्टार्थनायाऽर्चनायाऽपि वा यत्र सर्वत्र शक्तास्स मे भारतम्

।।९।।

जनिदिने तव भावनिबन्धनं मनसि जातमिव श्रुतिरञ्जनम्
कृतमिवाद्य गताहनि मज्जनं शुभसुमं प्रददामि भवज्जनम् ।।१०।।

******

## ।। देवेशशर्मणे जन्यहश्शुभैषणम् ।।

*************

श्रीमत्त्र्यम्बकविज्ञसाधुचरणासक्तस्स्वतन्त्रार्थक:
त्यक्त्वा लौकिकनीतिरीतिशरणं यज्ञादिधर्म्ये रत:
अस्मिन् वर्षितसदृतौ शिवमये चेतोहरे श्रावणे
सौख्यायुष्यसमन्वितं जनिदिनं देवेश ते कामये।।१।।

विप्रोल्लासयुते शुभान्वितगृहे शास्त्रार्थिभिश्शोभिते
प्रायो यत्र पदार्थशीलपुरुषो न्यायादिकं भाषते
संसारस्य विभिन्नदु:खशमनं पूजादिभिश्चर्यते
तत्र त्वं दशवर्षवासमयितो मित्रैश्च मोदङ्गत: ।।२।।

वेदान्तसारं ह्यपि साङ्ख्ययुक्तिं हो ब्रह्मसूत्रं बत शाङ्करं वा
वैराग्यदां पञ्चदशीं तथैव बाबागुरुश्चेह समं प्रवक्ति ।।३।।

सर्वोपनिषदो गावो दोग्धा बाबागुरुस्तथा ।
भोक्तारश्छात्रगणकाः दुग्धं गीतामृतं महत् ।।४।।

एवं सर्वविधं हि शास्त्रपदकं संलभ्यते ब्राह्मणैः
गुर्वौदार्यजलाभिषिञ्चितजनो नूनं शिवत्त्वं व्रजेत्
सर्वं विप्रकुलं हि भक्तिशरणं संलोक्यते सर्वदा
तस्मात्सर्वपथेष्वरुद्धगतयो देवेश! सर्वत्र वै ।।५।।

नृत्येन्मयूरो मनसोऽद्य नूनं निद्रागते वृष्टिमये प्रभाते
कृष्णाम्बुदैस्संवृतखं विलोक्य, चायं पिबन्सन् रचयामि भावान्
।।६।।

न वै पुरे ग्रामवदस्ति शोभा न प्राकृतं वा हरितादिदृश्यम्
तथापि वित्ताय वसेद्दुराशो लुनाति नैजं हि सुखं मनुष्यः।।७।।

कर्तव्यनिष्ठोऽसि जनप्रियोऽसि
श्रीत्र्यम्बकाऽर्चासु समारतोऽसि
शान्तोऽसि देवेश गुणावृतोऽसि
स्यान्मङ्गलं जन्मदिनं त्वदीयम् ।।८।।

सरेम वापि क्व पतेम शैवेऽनुयाम कं नैव मनोऽनुशास्ति
अतश्च शास्त्रं हृदयस्य तन्मे शुभाशुभं यच्च चिनोति नीतिम् ।।९।।

किशोरस्य सुगीतानि श्रुत्वा चित्तं नवीभवेत् ।
अतो जन्मदिने श्रूयाद् देवेश ! स्याः सुखङ्गमी ।।१०।।

 ISBN – 978-81-943558-3-0

******

लेखनकालो दिनाङ्कश्च - १०:५० पूर्वाह्णे, ०६/०८/२०१९,

चायपानानन्तरम् , गाजियाबादस्थगृहे ।

******

## ।। श्रीसदानन्दस्वामिने जन्मदिनशुभकामना ।।

************

धर्म्यं मार्गं परिचरति शुभं द्वारिकापीठसुस्थ:
नानाशास्त्रोल्लसितहृदयश्शंकराचार्यभक्त:
विद्वद्वृन्दैरभिनतवपु: काव्यकाराभिरक्त:
जीयाज्जीव्याच्छतसममहो श्रीसदानन्दसाधु: ।।१।।

हरानन्दोऽमन्दश्श्रुतिरतजनानन्दकरण:
द्विजानन्दस्सुन्दस्मृतिसृतसुखानन्दशरण:
मखानन्दो वन्द्यो विदितशिवतत्त्वानुसरण:
सदानन्दस्वामी नयनपथगामी भवतु मे ।।२।।

अहो वेदान्तेऽपि श्रयति नवतथ्यं मतियुत:
क्वचिद्दीक्षान्तेऽपि प्रवदति शिवं वै यतियुत:
नृणां दैन्यान्तं यस्सुरगुरुसुभक्त्याऽभिवदति
सदानन्दस्वामी जयतु शतवर्षं भुवि सुखै:।।३।।

गवां भक्तस्साधूद्धरणकरणे सक्तमतिधृत्
बुधानां सत्कारे प्रियजन इव प्रीतिमतिधृत्
पुराणानां चर्चामननकरणे दक्षमतिधृत्

 ISBN – 978-81-943558-3-0

सदानन्दस्वामी जयतु शतवर्षं भुवि सुखैः ।।४।।

यतित्त्वं धृत्त्वा यश्श्रुतिशरणनम्योऽतिसरलः
सुधीत्त्वं श्रित्वा यो बुधजनसुमानं प्रतिगतः
शिवत्त्वं संसारे प्रसरति सदा ज्ञानकिरणैः
सदानन्दस्वामी जयतु शतवर्षं भुवि सुखैः ।।५।।

हिमांशुर्गौडोऽहं समुदितसुभावैर्जनिदिने
यते ! चायुष्यं ते भवतु चिरमित्यर्थपरकैः
पदाब्जेष्वागुम्फ्य प्रतिशिवपदं पद्यशरणैः
पुनर्नामं नामं मनसि सुखतां यामि शुभताम् ।।६।।

लेखनसमयो दिनाङ्कश्च – ०२:०९ मध्याह्ने,
०६/०८/२०१९,गाजियाबादस्थगृहे ।

******

## ॥ आचार्यविष्णवे जन्मदिनशुभकामनाः ॥

*************

दिव्यानन्दविनन्दितं नवसुखैस्सत्पण्डितैर्मण्डितं
ब्रह्माण्डेशविशेषनायककृपापूतं प्रसादान्वितं
श्रीसङ्कर्षणनागदेवदययौन्नत्यप्रदं भीहरं
विष्णो! जन्मदिनं भवेत्तव धनायुष्यैश्च हर्षैर्भृतम् ।।१।।

श्रीनीलोत्पलभद्ररुद्रनयनालोकैश्श्रियं त्वं व्रजे:
भूयात्ते जलरुद्रदेवदयया तृप्तिश्च तृष्णापहा
तद्वच्छ्रीबलभद्रदेवकृपया स्यात्ते महामङ्गलम्
जीवे: वै बलभद्रपीठलसितो दीर्घायुषं भो: द्विज।।२।।

यद्यप्यत्र भवन्ति सर्वजनताधर्मार्थसङ्गामिन:
नैके भागवतादिवाचनरता ज्ञानं च भक्तिं विना
वित्तावाप्तिरथैव तत्र भवतात् तेषां सुलक्ष्यं सदा
तादृग्भ्य: परिरक्ष्य चात्महृदयं विष्णो! शतं जीवतात् ।।३।।

आयुर्गच्छति जीविनां तदपि ते मोदं व्रजन्तीव वा
हाऽऽत्मानं न विदन्ति , वेत्तुमथवा नैवं यतन्ते क्वचित्
जानन्तो जगतो विनाशपरतां केचिच्च योगङ्गता:
मुक्तिस्तेषु च केनचित्प्रलभते , विष्णो ! समं चिन्त्यताम् ।।४।।

नैराश्यैर्भृतमस्ति जीवनमिदं सर्वत्र चान्धं तम:
साहाय्याय न कोऽपि मित्रगणके सर्वे परामर्शदा:
मत्त्वा वा हृदयं स्वकीयसुहृदं नैहि क्वचिद्धीनतां
विष्णवाचार्य! शतं सुखं च शरदो जीवेरहं कामये ।।५।।

गामं गामं शिवपथमहं गीतवान् शैवगीतं
नामं नामं गणपतिपदं नीतवान् लड्डुकानि

स्मारं स्मारं स्मरहरवपु: पीतवान् बिल्वरस्यं
श्रावं श्रावं हरिगुणकथां संसरामि प्रभाते ।।६।।

******

## ।। श्रीगुणप्रकाशचैतन्यमहाराज-जन्मदिनशिवैषा ।।

************

विभिन्नशास्त्रेषु गुणा: विभिन्ना:
तेषां समाख्याश्च कृता: विभिन्ना:
गुणैर्युतो वाऽप्यगुणश्शिवस्स
गुणप्रकाशैस्सममूह्यते तत्।।१।।

गुणानां वैचित्र्यं निखिलकृतिषूल्लिख्यत इव
तथाऽप्येभ्यो भिन्नो ग्रथितगुणरूपोऽपि विदित:
सदात्मा दिव्यात्मा परगुणशिवात्माऽगुणपरो
विचार्यैतद्विद्वन्! विचरतु शिवोऽहं त्विति धिया ।।२।।

ह भवतां परिलोक्य जनेर्दिनं
द्रुतविलम्बितमार्गसरोऽस्म्यहं
शिवनिसेचनमत्र निदृष्टवान्
मनसि जागृतिमाप्य समुद्यत:।।३।।

जनिमतां क्व भवेच्छुभशंसनं शिवमयं निखिलं ह्यविजानताम्
अहह लौकिकरीतिसमाश्रय: कुरुत एव जनस्सुखताऽऽप्तये।।४।।

प्रबलयोगवतां मखकारिता
समुदयेद्धरिमोद्यसुकर्मिता

जठरशिश्नसुतुष्टिरतैः क्व वा
क्षणमहो गरुडध्वजचिन्तनम्।।५।।

वयं बुद्धाः वयं बुद्धाः जल्पन्त्युच्चैः परे जनाः।
अवाग्जनो यथा ब्रूयादाम्रं सुस्वादुरस्त्यरे।।६।।

नेति नेति चरन् गच्छेद्वेदो यत्राऽप्यवागिव।
अद्य कलौ जनास्सर्वे तद्व्याख्यानविचक्षणाः।।७।।

वेदं न दृष्टवान्यश्च शास्त्रं स्वप्नेऽप्यगोचरम्।
सोऽपि चाद्य महाज्ञानी शिक्षेच्चास्मादृशानपि।।८।।

किं वदानीव हे विद्वन् धूर्तानां कुयुगेऽधुना।
सरलाः बुद्धिमापन्नाः सीदन्तीव पुनः पुनः।।९।।

अहो धर्मरतानां वै जन्म साफल्यमृच्छति ।
भोगादिवीप्सने विप्र ! के न गर्तं गता इह।।१०।।

कर्मलोकं समासाद्य चात्मविज्ञानतत्पराः।
दीने दयां चरन्तो वै नायान्तीह जनिम्पुनः ।।११।।

गर्भत्त्वं हि महादुःखं को मूढस्तं समिच्छति।
अतोऽस्मिन् जीवने नूनं कर्मबन्धं दहेद्बुधः।।१२।।

प्रतिदिनं मम जीवनमायुषं
क्षणकणं परिणश्य विभासकृत्

गमयतीव स मृत्युमुखे ह मां
क्व शुभकामसरो मनुजोऽस्ति मे ।।१३।।

शिवपथे हृदयं मम नाययेत् हरिकथामृतमेव च पाययेत्
मनसिजादिकदोषमथो हरेत् स शुभकामयुतो मम नापर: ।।१४।।

गुणप्रकाशैर्जनवृन्दमान्यो
श्रुतिप्रभासैर्द्विजवृन्दवन्द्यो
मखादिकार्यैस्सुजनैश्च नन्द्यो
गुणप्रकाशश्चिरसौख्यमीयात् ।।१५।।

हिमांशुगौडो नहि वा कदाचिल्लोभादिरक्त: परसंस्तवार्थी
समुच्छलत्काव्यतरङ्गरूपैरव्याहतत्त्वेन लिखेत्स्वचिन्त्यम्।।१६।।

जनिदिनं भवतश्शिवकीर्तिभृत्
प्रभवताच्च निरुक् फलयुग्विभृत्[9]
अखिलधर्मसुपोषितधारणां
प्रबलयेत्प्रबलार्थितचिन्त्यग:।।१७।।

******

## ।। समर्थश्री-जनिदिनहृद्धर्षः ।।

*************

अश्वत्थाम्रवटादिपल्लवयुतं कृत्वा शुभं मण्डपम्
आहूय द्विजमण्डलीं च गरुडारूढं स्वचित्ते स्मरेत्

---

[9] फलैर्युञ्जन्तीति फलयुजस्तान् विशिष्टेन बिभर्त्तीति फलयुग्विभृत्, फलयुग्विभृत्तव जन्मदिनं भवेदित्यर्थः ।

सङ्कल्पादिकपूर्वकं सविधिकं देवार्चनं तर्पणं
होमं ब्राह्मणभोजनं च जनिमान् जन्माहनि स्वाचरेत्।।१।।
जीवनं धन्यतां याति तस्यैव यो
धर्म्यमार्गे सरेत् भोगतृष्णापहे
श्रीसमर्थो भवान् धर्मराट्सत्पथे
वर्धितश्चर्द्धिगश्शान्तिगो लक्ष्यते।।२।।

श्रद्धाधारभरस्समस्तजगति श्रीणां विलासोऽथवा
तत्कारुण्यसुधानिपीतमनसाऽनायासलभ्यो भवेत्
गाम्भीर्येण च नीलखाद्धनरवैर्यो गर्जयेद्विष्णुराट्
वृष्ट्या तर्पयतीव जीवनधरान् संसारदग्धाँश्च यः।।३।।

यो वा कृन्तति हिंसकान् रणगतश्चोल्लीलया लीलयेत्
दृष्ट्याऽदृष्टविदृष्टशिष्टपुरुषो लोकस्य यश्चैकराट्
श्रीमत्त्र्यम्बकसाधनारतमनाः! नानायतीनां गुरो!
दीर्घायुष्यसुखैर्विमण्डितमहो त्वन्मङ्गलं कामये।।४।।

केचिल्लोकपिपासया शिवगुरुं विस्मृत्य गर्तं गताः
केचिच्चापि सदैव वामनयनासङ्गैश्शुभाद्वर्जिताः
केचिन्मङ्गलराधनादिनगणोल्लोकाच्च्युताः दुःखिताः
तेभ्यो दूरमिवास्तु शैवदिवसैर्हृष्टं भवज्जीवनम्।।५।।

नागानां गुरुरस्ति वासुकिफणिः पाताललोके वसेत्
मन्त्रैर्होमपरो नरो वियति वा सर्वत्र यातुं क्षमः

यद्वाऽथर्वणि सर्पसिद्धिसरणीं संसाध्य यातु क्वचित्
नानाश्चर्यपरम्परा श्रुतिधरैस्साक्षादिव प्राप्यते।।६।।

मन्त्रप्रयोगैस्सकलार्थसिद्धिं
व्रजन्ति तन्त्रान्वितकर्मशीला:
किन्त्वद्य हा शास्त्रभृतां समाजे
च्युता असिद्धा: विबुधा भ्रमन्ति।।७।।

भवतु जन्मदिनं नवमार्गदं विमलवारिवदत्र भवन्मन:
शममितीहत ऐहिकजीवनेऽधिकसमुत्सुकतामुपयातु क: ।।८।।

कवनलास्ययुतं शिवदं मुदौ-न्नतिकरं नटराजविरञ्जितम्
गणपनृत्यमिवार्थकरं महद् भवतु जन्मदिनं मननाश्रयम्।।९।।

समर्थश्रीस्वामिन्निजहृदयभावैर्विरचितं
जनेर्माङ्गल्यार्थं हरिनिलययातेन च मया
सदैकान्ते शान्ते वसति स हिमांशु: पदमुदा
भवच्छैवीच्छाभिश्श्रितमिदमथ स्वस्तिवचनम् ।।१०।।

स्वस्तिवाचां नियोगोऽयमष्टम्यां श्रावणेऽधुना।
शुक्ले शुक्रे मयाऽकारि त्र्यम्बकस्वामिहेतवे।।११।।

******

# ॥ श्रीवेदप्रकाश-जन्मदिवसचित्तकल्पा ॥

************

नरवरप्रतिहर्ष उतोदितं श्रममहत्त्वमनेन निबोधितं
सुजनसुस्मृतिको गुरुगुण्यगीः[10], तमिह वेदमहं समलक्षयम् ।।१।।

परजनोत्सहनं गुणगायनं गुरुवरप्रतिभक्तिनिदर्शनम्
सुहृदि भावसुरक्तिविकासता तदिह वेदजने परिलोक्यते।।२।।

कृतसुगायनकौशलभूषणं सृतसुपूजितविप्रसुसङ्गतिं
धृतसमादरलोकपरम्परां तमिह वेदसमाख्यमबोधयम्।।३।।

हृतनिराशजदु:खमथामलं श्रितविभिन्नजनप्रतिमोदनं
कृतकनिष्ठशुभाशयचोदनं जनिदिने बत वेदमुपाश्रये।।४।।

हरिगुणोत्सुकसत्पथगामिनं नरवरद्विजहर्षसमायुतं
विविधपुष्पसुगन्धिपदान्वितं कविमनोजमिमं समभावयम्।।५।।

धनविलोभहृदा परिचारिणं हरिगढाध्ययनस्थलपाठिनं
शिवसुरक्तियुतं शिवभाविनं जनिदिने बत वेदमथाह्वयम्।।६।।

हरिकृपोन्नतिखे परिराजयेत् लघुमपि स्वजनं द्विज! वर्धयेत्
जनिमतां जनिलक्ष्यमुताश्रयेत् पुरुषमेव हि वेदजनो भजेत् ।।७।।

हिमलसच्छिखरार्कसुरश्मयो नवसुवर्णनिभां परिधृत्य वा
तमथ राजतहैमगतिश्रयाः शिवकृपा किमु हैमविरञ्जिनी।।८।।

विविधपल्लवविस्तृतमण्डपे परिचरेन्नगशायिसमर्चनम्
जनिदिने चिरमायुषमर्थयेत् स सकलं प्रददात्यपि वेद हे।।९।।

******

[10] गुरोर्गुण्यं गृणातीति गुरुगुण्यगीः।

 ISBN – 978-81-943558-3-0

# ॥ नीलेशनागराय जन्मदिनोपदेशः ॥

************

मधुमयकलिकानां को रसं सम्पिबेद्वा
पिबतु रसमन्यः पाटलानीरजानां
जगति बत पिपासाक्रान्तचित्ते द्विज! त्वं
भ्रमर इव विधेहि स्वीयरूपं स्वभावम् ॥१॥

नहि न विषयतृष्णा शान्तिमेति प्रियेषु
अनलपतितकाष्ठानीव वर्धेत नित्यं
तदपि च युवतायां सर्वतोभाविकामः
मदनमदभृतानां कामुकीनां क्व शाम्येत् ॥२॥

अलिकुलयुतवल्ली स्यान्नवोल्लासपूर्णा
मधुपगणवृता वा नीरजा शोभमाना
नवयुववयसां वै कामरागाभिपूर्णा
मदननिलयगा या योषिता नृत्यतीव ॥३॥

गगनगतविशिष्टा नीलवर्णा प्रशान्तिः
भणति तमिव चाऽव्यक्ताक्षरं केवलं वा
तदिव हरिशरीराभाऽपि नीला समुक्ता
रमत इव जगद् हो श्रील-नीलेशराशौ ॥४॥

त्वमपि निजयुवत्त्वे प्रेयसीप्रेममग्नो-
ऽस्यपि मदनशराणां लक्ष्यतामेसि सद्यः
नववयसि शिवारेरग्निदग्धोऽपि मुग्धो
भ्रमति चरति नैकानीव कर्माणि लोकः॥५॥

भवतु बहुविधानां नागरीणां कलानां
सुरतिरसरहस्यज्ञस्स्मरोद्दीप्तचित्त !
स्मरसमरसुयोद्धा नागर! त्वं भवाद्य
कुसुमसदृशबालानां प्रियत्वं समैहि।।६।।

तव जन्मदिने नवकाव्यकला
स्मरकेलिरिव स्फुटिता मनसि
हृदये धर मे मदनाप्तिकलां
वशिता वनिता भविता च यया।।७।।

शुभरूपसुवाङ्मधुरस्मितकैः
नववस्त्रसुयानलसत्पुरुषैः
जलवद्धनवर्षणशक्तजनैः
द्रुतमङ्कगता हि कृता रमणी।।८।।

द्वयमेव फलं भुवि कर्मयुजां
शिवभक्तिरथो रमणीरमणं
नहि लब्धमिदं पुरुषैर्यदि हा
मरणं शरणं करणीयमतः ।।९।।

विदुषस्तव भर्तृहरेर्वचसा
गदिता विविधा मदना सदना
क्वचिदर्थकरी बत तापहरी
युवतापरिभूषणपद्ममुखी ।।१०।।

कुरु विश्वसनं मम वाक्यनये
भव सुस्थमना: निजकार्यचये
द्विज! लोकसुखं परलोकसुखं
रमणीरमणं कमलारमण: ।।११।।

नीलेशनागराख्यस्य जन्मनो दिवसेऽधुना ।
लक्ष्यश्रमसुयुक्तस्य कृतो ह्यत्र पदाश्रय: ।।१२।।
******

## ।। खेलेन्द्रशर्मणे जनिदिने शुभस्मारणम् ।।

************

श्रीबाबागुरुराश्रमे नवबटून् सम्पाठयन् कौमुदीं
मध्ये मध्य इव प्रचोदनपरो नानानिदर्शैरपि
सन्धीँस्तद्धितकृत्तिङन्तसदृशान् पाठान् समासाँस्तथा
स्त्रीलिङ्गं स्वरवैदिकीं दिनमुखे हर्षाश्रितः कारकान् ।।१।।

केचित्तत्र सदाऽवधानसहिता: जृम्भन्ति केचिद् वृथा
केचिन्निद्रितवच्चरन्ति बटवो येषां न पाठ्ये मन:
कण्डूयन्ति शिरांसि केचिदपरे यामोऽद्य शौचाय वा
हा दुर्भाग्यनिपीडितो न रमते सारस्वते वाङ्निधौ ।।२।।

खेलेन्द्र त्वमपीह नैकघटनास्संलोक्य चैतादृशी:
प्रायश्चञ्चलमानसोऽभव इति स्वार्थाद्विहीनोऽस्यपि

पाठ्ये ते रुचिरल्पतां प्रतिगता,पाकक्रियाकौशले
प्राशंस्यं गतवान् गुरोरपि सहच्छात्रैस्सदा मानितः।।३।।

भोज्यायोजन आरभेत उत चेत्त्वं तत्र मुख्यस्सदा
शाकान्नादिकसुव्यवस्थितकरः पाकादिदक्षोऽस्यपि
शष्कुल्योऽपि कटाहतैलपतिताः फुल्लन्ति नूनं यदा
त्वं तिष्ठेश्च महानसे द्विज! निजं सन्दर्शयेराननम् ।।४।।

क्षीरं दुर्लभमस्ति यत्र परितो लोके नराणामपि
शष्कुल्यो न लभन्त एव पुरुषाः स्युर्वा सहस्राधिपाः
किन्त्वत्रैहि विलोकयेः नरवरे भोज्यादिकायोजनम्
शास्त्रोल्लासयुते तपोयुतजनाः कां नैव यान्ति श्रियम्।।५।।

काकाः केकिकपोतसर्पनकुलाः क्षीरं पिबन्तीह हो
श्वानश्चैव बिडालमूषकखगास्तृप्यन्ति वै पायसैः
विप्रोच्छिष्टमदन्ति चान्नमथवा क्षिप्तं जनैः पत्रले
तस्माज्जीवगणेऽरिता नरवरे नालोक्यते कुत्रचित्
(को नायाति सुबन्धुतां सुहृदयैः पिण्डेन पूर्णे मुखे)।।६।।

खेलेन्द्रो बहुधा खगस्य फणिनां ग्राहे समर्थोऽस्यहो
पीडानामुपचारकृच्च चटकानां त्वं मया लक्षितः
गङ्गायां तरणेऽपि कर्कटसमुद्धारे ह्युदारो भवान्
नानाजीवसुहृद्! विवेत्सि भणितां भाषां हि भावस्य वा।।७।।

पश्चाच्छास्त्रिगतः प्रशान्तनिलये श्रीमत्पचौर्यन्विते
श्रीबाबागुरुसद्धृदा विरचिते वै देवदूतालये
ज्योतिर्गानविनोदनीरजवृते श्रीओमविक्षोभिते
चायप्रीतहिमांशुविभ्रमयुते खेलेन्द्र! भूयोऽवसः।।८।।

तत्र त्वं च दिनादिसूर्यकिरणैस्स्वर्णायिते चाश्रमे
विप्रैर्वा यजुषां स्वरैः श्रुतिमतां श्रोत्राणि सम्पाविते
साहस्रीं च हरेः पचौरिगुरुणा वृद्धस्वरैर्गायिते
तन्नानौषधिभृज्जलां स्वगुरवे सम्पाययेः काङ्गडीम्।।९।।

हस्ते चैव निधाय यश्चलति विद् सद्वेत्रयष्टिं जरा
ज्योतिश्शास्त्रमहाविधानलसितो गच्छेन्नगर्यां यदा
स्यूतं चान्यबटुर्धरेत् सहचरो हासादिसक्तश्शनैः
श्रद्धाल्वालयभोजनं प्रतिदिनं कुर्यात् पचौरी गुरुः ।।१०।।

वार्धक्येऽपि मतिं विलोक्य मतिमन् ! को न व्रजेद्विस्मयं
सर्वं सुस्मृतसुस्थमस्ति विदुषश्शास्त्रं च वा लौकिकम्
सर्वस्यापि च नागरस्य कुलजानां जन्मपत्रादिकम्
कुत्रापीह कदापि चैव शृणुयात् श्रीमत्पचौरीमुखात् ।।११।।

सौभाग्यं तव खेल! पाचक ! गुरोः पुण्याश्रमे सन्निधौ
नानाहास्यरतोऽभवोऽपि धृतवान् मोदं प्रकृत्याऽन्विते

चाद्य त्वं सुकृतैस्सुरार्चकपदं यातोऽसि भाग्याच्च वा
किन्तु व्यत्ययितानि जीवनदिनानि स्मारितानीति ते ।।१२।।

सौभाग्यान्वितमस्तु वित्तसरणीर्लब्धा विमुग्धा भवेत्
शैवाशार्चितदिव्यदायिशरणं श्रीपीतवस्त्राश्रय:
खेलेन्द्र ! प्रतियाहि यौवतपदं , नो वृद्धतां कर्हिचित्
जानीहीदमशेषजीवनमथोद्यानं सुमानामिव ।। १३।।

शिवं स्मृत्त्वा नरो नूनं सर्वकार्याणि साधयेत्।
जन्मानि नाशयेच्छूली त्रिशूलेन त्रितापहा।।१४।।

******

लेखनसमयो दिनाङ्कश्च – १०:५८ पूर्वाह्ले, १९/०८/२०१९
स्थानम् - गाजियाबादस्थगृहे ।

******

## ।। राहुलभार्गव-जन्मदिन-प्रचोदनम् ।।

*************

कस्मै कं विदधामि राहुल! मनो न श्रीयते निश्चयं
श्रद्धाऽश्रूच्छलभावरक्तहृदये जाने न किं विद्यते
नाऽयं जन्म समेतुमिच्छति जन:, शैवार्थनं त्वत्कृते
शम्भो:, भार्गव! पादसेवनरतो भूया: स्वजन्माहनि ।।१।।

त्वं भूयोऽपि परोपकारसरणीमेहि स्वकार्थं विना
जानातीह जनः फलेत्क्वचिदहो पुण्यस्य वृक्षो महान्
सर्वे पाशवमाव्रजन्ति मनुजा: ये त्विन्द्रियार्थे रता:
आत्मज्ञानविहीनमूढपथिको दु:खानि संसेवते।।२।।

तस्माद्यत्नपरो भवेस्त्वमिह वै आत्मीयशास्त्रे द्विज!
आयुर्याति शरीरिणां प्रतिदिनं श्वासस्य को निश्चय:
वैराग्यं सुखदं जगत्तृणमिव त्यक्त्वा विविक्तश्चरेत्
तेनेदं सफलं हि जन्मदिवसं नूनं भवेन्नान्यथा।।३।।

यद्यप्यस्ति युवत्त्वमाशुरमणे शक्ती रमण्यस्तथा
नानारङ्गयुतं विभासि निखिलं मोद्यं जगन्नूतनं
स्वप्नालोकमिव प्रयान्ति दिवसा: आयुश्च नाऽऽलक्ष्यते
मृत्युग्रास इवास्य नैव मनुजस्य प्रत्यय: कर्हिचित्।।४।।

वित्तोपार्जनसंरतस्य दिवसा: हा व्यत्ययं यान्ति वै
शम्भोश्चिन्तनहीनदीनपुरुषस्याऽऽस्ते शिवं न क्वचित्
नैवं पुत्रकलत्रबान्धवजना रक्षन्ति कालेऽन्तिमे
तस्माज्जन्मदिने तवाद्य, शिवतामेहीति वाक्यं मम ।।५।।

नैवं सौहृदमत्र कस्यचिदहो सन्तिष्ठते मानसे
सर्वस्स्वार्थपरम्पराश्रितजनस्साध्नोति कार्यं स्वकं
तस्मादुद्धर चात्मनैव पुरुषाऽऽत्मानं प्रतीक्षाऽस्ति का
जीव्ये नीरतरङ्गचञ्चलतरे को जीविनां प्रत्यय:।।६।।

वैराग्यैकपदैर्भणामि यदहो नैतज्जनैरुच्यते
कामास्वादनतत्परैर्विषयतापाशे निबद्धैश्च वा
वार्धक्ये हरिभक्तिमेमि मनुजो यश्चिन्तयेन्मूढधी:
आत्मानं स लुनाति वेत्ति न जनो कालोऽवश: कथ्यते।।७।।

जाने नैव कदा वदामि किमहो नानारसैस्सम्भृत:
पुण्याल्लब्धविरागतां सुपुरुषो वक्तीत्थमेतज्जगत्
किन्तूज्जागृतकामभाव इव वा सर्वं स वै विस्मरेत्
तस्माद् भार्गव! किं वदानि भवतो जन्माहनीहे नहि।।८।।

बाल्ये चाभ्यसति श्रुतिं च विधिवच्छास्त्राणि संसेवते
वित्ते चित्तमुपस्करोति रमणे यो वै युवत्त्वङ्गतो
वानप्रस्थमयेद्धरिं भजति चेत्पश्चाच्च मोहापहं
धन्यं जन्म जनस्य तस्य भवति त्वं चाऽऽचरेरीदृशम् ।।९।।

जनिदिनं शिवताप्रतिदर्शकं
भवतु सत्पथगामिजनैर्वृतं
नवसुखोल्लसितं धनदं शुभं
तव, हिमांशुरहं द्विज! कामये ।।१०।।

जन्माष्टम्यां त्वदर्थेऽद्य श्रीकृष्णजन्मकोत्सवे।
गोपालचरितैर्जीव्यं प्रेरितं स्याच्च कामये ।।११।।

******

# ॥ सूर्यकान्तचौबे-जन्मदिने विचारोद्भवः ॥

************

चौबे ! च्यावनलेह्यलेहनपरो भूत्त्वा चरेदासनं
शारीरं भवताच्च सुस्थमिति ते वेगैर्ह्यस्त्वं भवे:
ब्राह्मे जागरणाच्चिरायुषमहो संलभ्यते प्राणिभि:
प्राणायामपरो भवेज्जनिदिने त्वन्मङ्गलं कामये॥१॥

मायूरं ह्यपि कौक्कुटं फणिगतं चौष्ट्रं भवेदासनं
हांसं चैव बकासनं हयभवं काकासनं गार्दभं
मत्स्याख्यं नकुलासनं च गरुडाकारं तथा काच्छपं
भाल्लूकं कपिकर्कटासनमहो सैंहं च वा वार्श्चिकम् ॥२॥

यावन्तो जगतीह जीवनधरा: नानाकृतिङ्गा उत
तावन्त्यासनरूपकाणि मुनिभि: प्रोक्तानि योगन्धरै:
तद्वच्चासनसंश्रयेण वपुषो नैरोग्यमुक्तं सुखं
पक्षोऽयं गदितो मनस्स्थितिदृढास्यै ब्रह्ममार्गे नृणाम्॥३॥

वज्राख्यं च सुखासनं शवगतं चोत्तानपादोऽपर:
सिद्धाख्यं च लतासनं भवतु वा वृक्षासनं वृक्षवत्
वीराख्यं धनुषासनं सुखकरं शीर्षासनं बुद्धिदं
एतेषां करणान्नवो भवति वै देहो मनस्स्थैर्यगम् ॥४॥

त्वद्धामगाथां तव वै मुखाच्च
श्रुता मया चायनिपानकाले
पितृव्यनीति: पितुरेव कर्म
त्वद्दृष्टिमार्गाश्रयणैश्च दृष्टम्॥५॥

 ISBN – 978-81-943558-3-0

कुले चरन्तीव जना: कुनीर्तिं
वीक्षन्त आत्मीयमहो न चेमे
भूम्यर्थलिप्साव्यथिता: रणाय
सदोत्सुका: मारणपद्धतौ ते।।६।।

केचिद्धनायात्मजनं प्रियं वा
घ्नन्तीष्टलब्ध्यै वनितामवाप्तुं
विषं ददत्येव न वा दयेरन्
पिशाचवत्ते विषयार्थिनोऽहो ।।७।।

भोस्सूर्यकान्त तव गेहकथां निशम्य
कालेऽधुना मनुजवृत्तिमलक्षयं वै
हा हाऽद्य नो सरलचित्तसरैश्च भाव्यं
सर्वत्र धूर्तकुटिला: परितो भ्रमन्ति ।।८।।

लुण्ठन्ति मित्रवदिव व्यवहृत्य केचित्
चाटूक्तिकर्मकुशलाश्च पुरो लुठन्ति
स्निग्धास्तवैव वयमित्यपि दर्शयन्ति
स्वार्थे च सिद्धिमयिते ह्यचिरात् त्यजन्ति।।९।।

किं किं ब्रुवन्ति न निजार्थविसाधनाय
किं किं चरन्ति मनुजा: न धनार्जनाय
किं दुष्कृतं न कुरुते रमणीमवाप्तुं
कं कं न हन्ति पुरुष: प्रतीकारभावात् ।।१०।।

 ISBN – 978-81-943558-3-0

विद्यार्जने गुरुकुले हि महाँश्च कष्टः
शास्त्रं न चिन्तितमहो यदि तद्विनष्टः
मोद्यं च तत्प्रभवतु स्मरणप्रसक्तेः
तद्रागरञ्जितमनाः गणयेन्न भोज्यम्।।११।।

किं सौहृदं न लभते शिवपूजनाय
सेवेत किं न विबुधं श्रुतिसाधनाय
गच्छेद्वनानि जपनाय च यक्षमन्त्रं
नानाविधानलसितो परियाति तन्त्रम्।।१२।।

विचाराश्शास्त्रचर्चाणां स्फूर्त्तिमाप्ता इहाऽधुना।
तव जन्मदिनं वीक्ष्य वच्म्येताँस्ते यथाक्रमम्।।१३।।

सूर्योपासनमस्तु नः प्रतिदिनं तेजःप्रदं शक्तिदं
निष्ठानिश्चितितादिगुण्यसरितामुद्वाहयेच्छ्रीरविः
तद्वत्स्यादभिवृद्धिरस्तु शिवता नित्यं नवा चोन्नतिः
जन्माहन्यहमत्र मङ्गलवचस्ते सूर्यकान्तार्पये ।।१४।।

******

लेखनसमयो दिनाङ्कश्च - १०/३४, २५/०८/२०१९, सोमवारः,
गाजियाबादस्थगृहे ।

******

# तृतीयपल्लवः

# विभिन्नकाव्यानि

## ॥ दिनचरी ॥

************

ब्राह्मे प्रबुध्य हरिराट्स्मरणं च कृत्वा
हस्ते हरिं च कमलां च गिरां च दृष्ट्वा
भूमिं नमेद्दिवसकृत्यविनिर्णयश्च
एतद्दिनादिसमये प्रथमं प्रकुर्यात्॥१॥

पश्चाच्च शास्त्रविधिनाऽथ विधाय शौचं
प्रक्षाल्य चाननकराणि, गुदं मृदाभिः
दन्तान् विशुध्य तरुकाष्ठकृतैश्च कूर्चैः
निम्बाम्रसम्प्रभृतिभिः दृढदन्तकामैः॥२॥

ये क्षीरिणश्च बत कण्टकिनश्च वृक्षाः
गुल्माः यशः प्रददतीति तथैव पुण्यं
तिक्ताः कषायिन उत स्युरहो सुगन्धाः
ते दन्तधावनविधौ सुखदाः भवन्ति॥३॥

हिन्तालतालसदृशा भवताद् गुवाका:
चेत् केतकी च तृणराडपि नारिकेल:
खर्जूरवृक्ष उत विप्र सदैव ताडी
दन्तप्रशोधनविधौ सकला: निषिद्धा:।।४।।

कूर्चं षडङ्गुलमयेच्च सदैव शूद्रो
अष्टाङ्गुलं प्रतिनयेद् वणिजां वरिष्ठ:
शोद्धुं नवांगुलयुतं रणमुत् प्रयुज्यात्
तद् द्वादशाङ्गुलमिति श्रुतिसेविविप्र:।।५।।

गङ्गादिपुण्यसलिलास्स्मरणं च कृत्वा
आवाहयेच्च मनसा सलिलेऽवगाह्ये
स्नानादिकार्यसरणं विमलैर्जलैर्वै
सन्ध्यादिकर्मनिरतो भव भावयुक्त:।।६।।

होमं च तर्पणमहो सवितुर्जपश्च
दर्भान् प्रगृह्य कुरु च स्थिरनव्यचित्तो
गङ्गातटे शिवगृहे स्वगृहे तडागे
शुद्धे, प्रलब्धसुविधाभिरशेषकृत्यम् ।।७।।

सङ्कल्पपूर्वकसुकर्म फलेत्सदैव
सूर्यार्घ्यदानमपि वा सवितुर्जपश्च
पापापहान्यपि तथाचमनानि नूनं
श्वासञ्यमो हृदि विभुं स्मर मन्त्रयुक्त: ।।८।।

न्यासाश्च मन्त्रविनियोगसुपद्धतिश्च
मुद्राश्च वेदजननीस्मरणानि नूनं
ज्ञेयानि चापि बत शापविमोचनानि
तैस्सान्ध्यकर्म फलति स्मृतिवेतृसूक्तम् ।।९।।

आजीविकां परिचरेच्च ततस्स्वकीयां
धर्मार्जितस्वपरिनिर्वहणैकनिष्ठः
मध्याह्नभोजनविनिर्मितिरस्ति चादौ
श्रीवैश्वदेवबलिकर्म समाचरेद्वै।।१०।।

हर्तुं महानसभवामपि पञ्चसूनां
देवप्रतोषजनकातिथिपूजनं च
कुर्याः गवेऽन्नफलदो भव भोजनात्प्राक्
स्त्रीर्बालवृद्धपुरुषाँश्च सुभोजयेस्त्वम्।।११।।

आचम्य देहि प्रभवे बहु धन्यवादं
एकान्तशान्तमुदितो भव मौनसक्तः
स्निग्धं च षड्रसयुतं ह्यपि किञ्चिदुष्णम्
शाकं च सात्त्विकमहो जन! भुङ्क्ष्व भोज्यम्।।१२।।

भोज्यान्तहस्तपरिशोधनमाशु कृत्वा
गण्डूषषोडशमथाचर चाऽऽस्यशुद्ध्यै
भुक्तं पचेदिति धिया शतपादगम्यां
कृत्वा दशाधिकनिमेषशयो भव त्वम्।।१३।।

शास्त्रैर्मतं न शयनं दिवसे कदापि
ग्रीष्मं विहाय, च रुजो प्रभवन्ति तस्मात्
विश्रम्य चाल्पघटिकां प्रतिबुध्य सद्यः
कार्यं स्वकं कुरु पुरभ्रमणं तथा वा ।।१४।।

सत्सङ्गविष्णुशिवकीर्तननर्तनानि
देवालयेषु कुरु भक्तिविवर्धनानि
पश्चाद्दिनान्तसमये त्ववगाहनान्ते
वस्त्रद्वयं परिधरे: भव सान्ध्यकर्मा ।।१५।।

प्रज्वाल्य देवसदने घृतदीपकं चा-
प्यारार्तिकं परिचरेत्सुमनास्सुमैश्च
पश्चात् कृताशनजन भ्रम पाचनाय
स्मृत्वा हरिं शयनमेहि सुशान्तचित्त: ।।१६।।

इत्थं मया दिनचरी कथिता जनेभ्य:
यत्पालनान्मनसि धर्मनिभा ह्युदेति
लोकद्वयेऽपि सुखभाग्घरिलोकगामी
स्वस्थो लभेत सकलं च सुखेन चिन्त्यम् ।।१७।।

******

## ।। आधुनिककाले कुटुम्बधर्मचर्चा ।।

*************

(आधुनिकं कौटुम्बिकं मूल्यह्रासादिकं दृष्ट्वा कुटुम्बधर्मनिर्वाहादिकविषयमधिकृत्य शास्त्रीयदृष्टिरादर्शकुटुम्बचर्चा चास्माकमत्र वर्ण्या। )

ज्येष्ठानामादरं कुर्यात् कुटुम्बे स्याच्च सौहृदम् ।
कार्याकार्यविवेकस्स्यात् तदा वै लभ्यते सुखम् ।।१।।
परामर्शस्सदा ग्राह्यस्सर्वेषां च कुटुम्बिनाम् ।
सर्वकार्येषु यात्रासु तदा बाधा न जायते ।।२।।
कुटुम्बस्यापि नाशस्स्याद्दुर्विचारैश्च सर्वदा ।
दुष्ट अलस एकोऽपि सर्वं तन्नाशयेत्कुलम् ।।३।।
हस्तक्षेपो भवेन्नैव कुटुम्बे वै परस्य च ।
परस्स्वकीयनाशाय वर्जयेत्स्वकुले परम् ।।४।।
अम्बापुत्रसुतास्वेवं जनकेऽपि सदैव च ।
प्रेम स्वार्थाद्विरहितं स्यात्कुलोन्नतये हृदि ।।५।।
स्वगृहस्य कुवार्ताऽपि कदन्नं वा दुराग्रहः ।
सम्मानजीवनाकाङ्क्षी कुत्रचिन्न प्रकाशयेत् ।।६।।
शास्त्रप्रोक्तानि कर्माणि कुटुम्बोक्तानि चाचरेत् ।
धैर्यं धृत्वा सरेज्जीव्ये न जाने किं कदा भवेत् ।।७।।
चेद्वा विवाहिता कन्या सुवरेण सुखे गृहे ।
हस्तक्षेपो न वै कुर्यात्तद्गेहे शान्तिकाम्यया ।।८।।
दुर्भाग्यात् पीडिता कन्या श्वश्रूगेहे भवेद्यदा ।
शक्यं चेद्वा सदा कुर्यात्स्वकन्यायास्सुखं तदा ।।९।।
लोभो यौतुकभूतो यस्स वधोः पीडनार्थकः ।
तस्य निवृत्तये नूनं सूपायानि समाचरेत् ।।१०।।
कुटुम्बस्यापि विच्छेदे कारणानि बहूनि हा ।
सन्ति सारस्वरूपेण लोभाद्यस्तत्र गण्यते ।।११।।
इदं व्याख्यानमखिलं तद्बुद्धेश्शोधनाय च ।
लिखितं चाद्य मध्याह्ने निद्रां यामि श्रमङ्गतः ।।१२।।

******

लेखनसमयो दिनाङ्कश्च – ४.४३ अपराह्णे, २०-०६-२०१९

स्थानम् – गाजियाबादस्थगृहे ।

******

## ॥श्रीबाबागुरुस्मृतिः॥

*************

यैश्च साकम्मया शङ्करः पूजितो
यैश्च साकं हि बाबागुरुस्सेवितः
जाह्नवीमातुरङ्के भृशं खेलितो
हाऽद्य विज्ञायते विस्मृतस्तैरहम् ॥१॥

यस्य वीक्ष्य स्मितं मोदिता ब्राह्मणा
रुष्टतां तस्य दृष्ट्वा निराशावशा
अक्षरं अक्षरं येन सम्पायितस्-
तं हि बाबागुरुं संस्मरामो वयम् ॥२॥

यस्य चान्नं पयो भूरिवर्षैरपि
यस्य विद्या तथाशिर्वचांस्यर्थतः
सन्निशम्य प्रलभ्य प्रभा वर्धिता
तं हि बाबागुरुं भावयामो वयम्॥३॥

येन नैकैरुपायैर्वयम्पाठिताः
बद्धजीव्यस्य चर्याभिरापोषिताः
सन्ध्यया पूजया श्रीप्रवृद्धिः कृता
तञ्च बाबागुरुं संस्मरामो वयम् ॥४॥

येन भोज्यं तपस्स्वीयजीव्यं तथा
संविहायापि वर्षैश्श्रमैः पाठिताः
शब्दवेदान्तसाङ्ख्यादयस्तत्त्वतः
तम्महाशास्त्ररूपं नमामो वयम् ।।५।।

जीवनं चैव सारल्यरूपैर्वहेत्
संश्रमैः प्राकृतैर्यापयेन्मोदनैः
शास्त्रतत्वं सदा चिन्तयेत् शिक्षिताः
येन तं श्रीगुरुं चाऽर्चयामो वयम् ।।६।।

आतपैर्वृष्टिभिर्नैव शीतेन वा
व्याधिभिर्नैव रुद्धं पदं[11] यस्य वा
पौरुषाचारसञ्चारयुक्तं द्विजं
धीमतामेकपूज्यं स्मरामो वयम् ।।७।।

******

लेखनकालः – सितम्बर, २०१५, भोपालपरिसरस्थच्छात्रावासे १३५ सङ्ख्याके कक्षे ।

******

[11] पदमत्र व्यवसायवाचकम् । यस्य पदं शिक्षणपूजादिकं व्याधिभिरपि न रुद्धमित्यर्थः।

## ॥ यन्नस्तन्नो भविष्यति ॥

************

लेशमात्रो न शोकोऽस्ति विस्मयो नैव मे क्वचित् ।
पुण्यैर्हि लभ्यते सर्वं यन्नस्तन्नो भविष्यति ।।१।।
मोदेनैवाऽत्र तिष्ठामि धावतश्च परान् जनान् ।
वीक्ष्य भाग्ये ह्यविश्वस्तान् स्मितास्याभा भवेन्मुखे ।।२।।

शतैर्यत्नैर्न लभ्यन्ते यानि ते न प्रयत्नवान् ।
विचिन्त्य हरिवाञ्छां त्वं मोदैश्शेतां पुनः गृहे ।।३।।
न लभ्यं याचनाद्वित्तं न कीर्तिर्व्यर्थजल्पनैः।
कामिन्यो भाग्यसंलभ्याः यन्नस्तन्नो भविष्यति ।।४।।

लभ्ये यत्नं कुरुष्वाऽरेऽकर्मण्यो न भवेज्जनः।
किन्त्वात्मगौरवं रक्ष यन्नस्तन्नो भविष्यति ।।५।।
न च्छलैर्नैव पापैस्त्वं वित्तं वस्तूनि वाप्नुहि ।
अस्थिराणीह सर्वाणि पापैः पीडा भविष्यति ।।६।।

वीरत्त्वं प्राप्यते लोके कामिन्यश्चैव कीर्तयः।
विद्यामोदश्च सर्वत्र यन्नस्तन्नो भविष्यति ।।७।।
श्रमन्ते गर्दभाः ये च विक्रीय मानमात्मनः।
लभन्ते नैव किञ्चित्ते मानं रक्ष प्रयत्नतः।।८।।

चातकः प्राप्नुयाद्वारि खगाश्चापि स्वभोजनम् ।
यद्भाग्ये तद्भवेन्नूनं यन्नस्तन्नो भविष्यति ।।९।।
मातुस्स्तने भवेत्क्षीरं जाते बाले नवे-नवे ।
तथैव प्राप्नुयाद्भोग्यं संसारेऽस्मिन् नरो ध्रुवम् ।।१०।।

विद्या वित्तं यशासीत्थं प्रभुत्त्वं चापि योषितः ।
विना यत्नेन लभ्यन्ते यन्नस्तन्नो भविष्यति ।।११।।
केचित्काव्यानि कुर्वन्ति विना यत्नात्स्वभावतः।
विद्वान्सोऽपि प्रयत्नैश्च काव्यं कर्तुं न सक्षमाः।।१२।।

अतस्तत्त्वं विचार्यापि शिवं ध्यात्वा सुकर्मयुक् ।
संसारे विचरेत्प्राज्ञो यन्नस्तन्नो भविष्यति ।।१३।।

---

लेखनसमयस्थानञ्च – सायङ्काले, अगस्त २०१५, रा.सं.सं.
भोपालपरिसरस्थकविभास्करच्छात्रावासस्य
१३५ सङ्ख्याके कक्षे ।

******

## ।। एकान्तवासो वरः ।।

************

संसारस्य समस्तशोकशमनं गार्हस्थ्यचिन्ता हृता
कामाद्यैः रिपुभिर्न पीड्यत इदं चित्तञ्च यच्चञ्चलम्
शान्तो निर्गतमोहदोषमनसा तिष्ठामि भक्त्यालये
शम्भोः रूपनिमग्नशुद्धजलवच्चैकान्तवासो वरः ।।१।।

निन्दासंस्तुतिवर्जितश्च जगतो नानाविधोपद्रवाः
शान्ताश्शान्तिमुपागता धनकृता लिप्सा निराशं मनः
मित्रत्वं न रिपुत्त्वमस्ति हृदये श्रीशङ्करस्तिष्ठति
भीतिम्भञ्जति सौख्यदस्स, मतिमन्नैकान्तवासो वरः।।२।।

ये सांसारिकमोहपाशपुटकाबद्धाश्च तृष्णारताः
जानन्तीह रसं न यत् प्रलभते चौदास्यभावे यतिः
मोदो यः प्रभुभक्तिभाजननृणां स्यान्नैव तल्लौकिके
तस्माद्धीयुत! शैवलोकनिरतो भूयात्सदैकान्तिकः ।।३।।

मत्स्याः धीवरकण्टकैश्च सरसो निष्कास्य हा मारिताः
दुःखं तद्धि जगज्जलाद्बहिरिदं सांसारिकाणां भवेत्
शम्भ्वासक्तनृणां च तद्भवति वै संसारवायौ ततः
ब्रह्माम्बौ विनिमग्नमीनमनसः! चैकान्तवासो वरः।।४।।

सम्पूर्णस्य हितं वदामि गुरुभिश्शास्त्रैश्च यत्प्रोच्यते
ध्यानैस्संयतमानसश्च शृणुताद् यद्वै जगद्ध्वंसकम् ।
एकं नाम शिवस्य रूपमथवा स्युस्तत्कथाः पुण्यदाः
ध्यात्वा भक्तियुतस्तरेद्द्रुतमहो भीतिम्भराद्दुस्तरात् ।।५।।

..........

लेखनसमयस्स्थानञ्च – सायङ्काले, अगस्त २०१५, रा.सं.सं.
भोपालपरिसरस्थकविभास्करच्छात्रावासस्य
१३५ सङ्ख्याके कक्षे ।

******

## ।। शिवानी मदीया स्वसा सा विभाति ।।

*************

सदा त्यागिनी या गृहे सर्वकार्ये
श्रमे दत्तचित्ता न वाऽऽलस्यरूपा
सुचायप्रिया चायदात्री च मह्यं

शिवानी सदा हार्दिकीव प्रभाति।।

क्वचिद्धास्ययुक्ता पवित्रा सुचित्रा
सदा शान्तरूपाऽपि सारल्यचित्ता
मनोज्ञा गृहे सर्वकार्येषु दक्षा
स्वसा सा तपोधारिणी मे विभाति।।२।।

शिवे श्रीशिवायां हृदा भक्तिसक्ता
शुभज्ञानविश्वासनिष्ठा सुशिष्टा
न चिन्ताविमग्ना सदा सुप्रसन्ना
सुजीवेच्छतं सा स्वसा मे शिवानी।।३।।

क्व वाऽहं ब्रवाण्यद्य तस्याश्च जीव्यं
स्वकाऽम्बापितृभ्रातृसौहार्दरक्तं
कुटुम्बस्य कल्याणिनी भोजनानां
विनिर्माणविज्ञा शिवानी स्वसा मे ।।४।।

क्व तस्या ऋणं चाऽप्यपाकर्तुमर्हो
जनोऽयं हिमांशुर्गतस्नेहसौख्यं
अहं भ्रातृकस्तत्समग्रेऽपि जीव्ये
यथासम्भवं श्रीशुभत्त्वं समीहे ।।५।।

******

## ॥ शास्त्रवतां सङ्गः ॥

*************

सदा शास्त्रवतां सङ्गः कर्तव्यश्शास्त्रिभिर्द्विजैः।
यतोऽशास्त्रीयपुरुषैश्शास्त्रज्ञानं विनश्यति॥१॥

व्याकरणादिकशास्त्राणि लग्नं यान्त्यपि चिन्तकम्।
संसारचिन्तनासक्ते कुतश्शास्त्रं समाविशेत्॥२॥

गृहचिन्ता समाजस्य चिन्ता वित्तार्जनस्य च।
व्यापारादिकलग्नस्य द्रुतं शास्त्रं विनश्यति॥३॥

अद्रोहिभिस्सदर्थैश्च शास्त्रासक्तैश्शिवैषुभिः।
विचारकैस्सदा सङ्गः कर्तव्यो वै बुभुत्सुभिः॥४॥

नानाविचारदक्षा ये तत्त्वचिन्तासमाहिताः।
तैस्सहैव विचारस्स्यान्नेतरैर्वाग्विडम्बरैः॥५॥

शास्त्रे नृपे च कामिन्यां वशो नैवास्ति कस्यचित्।
सर्वदा सर्वयत्नैश्च रक्ष्या ह्येते शुभैषुभिः॥६॥

******

## ॥ किमुत श्रयेम ॥

*************

किं वा ब्रवाम मतिमन् किमुत श्रयेम
(वर्षैश्शतैश्च परिरुद्धमिवास्ति तन्मे)
यच्चिन्तितं कुसुमसौरभसुप्रभातं
तन्नैव लभ्यमधुनापि विरुद्धवाचां
काचित्कथेव च विकल्पसरी विभाति ॥१॥

 ISBN – 978-81-943558-3-0

वृद्धा: मताश्च विधिवत्परितोषिताश्च
त्यक्ताश्च वामनयना: युवताऽऽगमेऽपि
शैवं च कर्म परिहीनमिवाधुना नो
तस्यैव पाक उत वै मनसोऽन्यगत्त्वम्।।२।।

ग्रामेऽस्मि चाद्य मतिमन् पुरुषा: सुमान्या
दृश्यन्त एव परितो विचरामि चेह
तेभ्यो नमस्कृतिसरोऽल्पवच: प्रकृत्या
लज्जालुराह जनता जनमेतमद्धा।।३।।

जीव्ये भवन्ति बहुधा नवकार्यबाधा:
चिन्त्यं न लभ्यत उत प्रविणष्टि दैवात्
सर्वं हि शास्त्रतपसा पुरुषा: प्रयान्ति
सूक्ति: कदापि विफला न भवेद्बुधानाम् ।।४।।

कश्चित्कविर्भवति जीवति शास्त्रहीन:
म्लेच्छैरिव प्रचरति श्रमहीनदीन:
काले स्वचिन्त्यमपि नाश्नुत ऐहिकं य:
तं किं वदेम सरणीयपथं मनोऽगम्।।५।।

सायन्तने निजगृहेऽरुणिमे सुखे खे
दिक्ष्वाऽऽरवन्ति परितो विहगा: डयन्तो
चिन्त्यं वयं च कविताभिरथाऽऽवयन्तो
क्रेतुं पयोऽपि , विरमेम निजं च लेखम्।।६।।

******

लेखनसमयो दिनाङ्कश्च - ०७:२५ सायङ्काले, ३१-०७-२०१९
बहादुरगढस्थे गृहे, अस्तङ्गतेऽर्के वर्षर्तौ श्रावणे कृष्णचतुर्दश्यां
बुधवासरे ।

******

## ॥ जलौघे बालरक्षिणी माता ॥

************

सेयं वारिमहाविनाशसमये संरक्षयन्तीह वै
पुत्रं स्नेहमयी ममत्त्वहृदया चिन्तां विहायात्मन:
कश्चिन्नैव समत्त्वमेति जगतो नूनं जनन्या: जनो
तस्मात्पूज्यतमामिमां सुपुरुषो यत्नैस्सदा तोषयेत् ॥१॥

काञ्चिद्ध्यपूर्वकरुणामृतपूरिताङ्गीं
घोराम्बुवाहसमये सुतधारिताङ्गीं
प्राणार्पणप्रलयतीर्णविनिश्चिताङ्गीं
तां वै नुमोऽद्य हृदयैकमतैस्सृताङ्गीम् ॥२॥

पश्यन्तु वन्दनपरा: हृदयोच्छलत्सद्-
भावैरिमां सुतसुरक्षणतत्परां हो
क्वाऽहो शतैश्च कवनैरपि नव्यशब्दै:
चित्रार्थभावकथने कविराट् समर्थ?३?

 ISBN – 978-81-943558-3-0

नेयं समग्रभुवनस्थसमस्तजानैर्
देवैरपीह समतामिव याति माता
सर्वो निजार्थवशतामिव सम्प्रयाय
रक्षादिकं परिचरेन्, न तथाऽम्बिकेयम् ।।४।।

क्वाऽहं हिमांशुरिह गौडकुलप्रजातस् -
संवर्णयेयमधुना जननीमिमां हो
यद्यप्यथोऽत्र हृदयेऽपि वहन्ति नद्यो
भावस्य, नो सरति वै सहसा जनोऽयम्।।५।।

किन्तूद्धान्कविगणान्कवितासिहस्तान्
अस्मद्गुरूनुत सुहृत्पदवीप्रयातान्
अन्याँश्च शास्त्रवचनाश्रितकाव्यकारान्
संलोक्य काव्यनभसि ह्युदितो हिमांशुः।।६।।

अम्बूनि जीवनकराणि सुदुर्लभानि
प्राप्यन्त एव पुरुषैर्बहुदत्तमूल्यैः
नानापुरेषु नहि पेयमहोऽधुना तन्-
नाशाय कल्पत इह प्रलयैकरूपः ।।७।।

त्राता न कश्चिदिह कस्यचिदेव भाति
नामाऽपि नेतुमथ कोऽपि समैति नाग्रे

प्राणप्रियैः प्रलयभूतमहाजलौघे
रक्ष्यस्स्वदेह इह, नापरमीक्षमाणैः।।८।।

तत्रेह जीवनकरी जनतैकवन्द्या
चित्रेऽधुना सकललोकनताऽभिनन्द्या
अस्मिन्प्रचण्डसलिलाकृतताण्डवेऽपि
सम्मण्डयेत्स्ववपुषं सुतरक्षणेन ।।९।।

चित्रं विलोक्य मनसि प्रतिभावयामि
देयं धनादिकमपःप्रतिबाधितेभ्यः
साहाय्यमत्र सकलैश्चरितव्यमेव
कश्चिन्म्रियेत न कदापि यतो निमज्य ।।१०।।

******

## ।। अस्मत्संस्कृतिः ।।

******

धृताऽस्मत्पूर्वजैस्सभ्यैः पालिता पोषिता बुधैः।
देवत्वं जनयेल्लोके भारती संस्कृतिस्सदा।।१।।
सुसंस्कारान्वितो भूत्वा शोभते मोदते यया।
संस्कृतिर्भारतीया सा धारणीया सदा समैः।।२।।
सद्वृत्तं दिव्यभूतीनां दुर्वृत्तं च दुरात्मनाम्।
ज्ञायते तायते सौख्यं यया सा संस्कृतिर्हि मे।।३।।
गुरूणां चापि सम्मानं लघूभ्यस्स्नेहसिञ्चनम्।
शिष्टाचारस्समैस्साकं बोधयेत्संस्कृतिस्सदा।।४।।
प्राणं चापि त्यजेत्प्राज्ञो धर्मं नैव च कर्हिचित् ।

धर्मसर्वस्वरूपा सा संस्कृतिर्भारती मम।।५।।
दीक्षा दानं तपस्तीर्थं ज्ञानं क्रत्वादयः क्रियाः।
प्रणप्राणपणाग्रत्वं सर्वं संस्कृत्यधिष्ठितम्।।६।।
वेदशास्त्रपुराणानि स्मृत्यारण्यकसङ्ग्रहः।
उपनिषद्भिस्समालक्ष्या भारतीया सुसंस्कृतिः।।७।।
यद्यच्चर्यं सदाचर्यं ब्रह्मचर्यं शुभं तपः।
तत्तत्सर्वं महत्तत्त्वं संस्कृतिश्रीसुशोभितम्।।८।।
सन्मानुषत्वशिक्षा वा लोकालोकफलं तथा।
यच्छ्रुत्याचरणादेव भारती संस्कृतिस्सदा।।९।।
संस्कृत्यर्थास्समे चार्थाः किं वदानीह चाधिकम्।
म्लेच्छधर्मविहेयत्वं संस्कृतावेव संश्रितम्।।१०।।
गोब्राह्मणसुरक्षा च राक्षसानां निकृन्तनम्।
धर्मस्थापनमेवापि संस्कृतिर्मे सुशिक्षयेत्।।११।।
असूंश्चापि वसूंश्चापि त्यजेदात्मप्रणं नहि।
नेशं वा विस्मरेदित्याश्रयेत्सा संस्कृतिर्मम।।१२।।
सौम्यसात्विकशीलत्वं सत्याहिंसापरिग्रहाः।
लभन्ताश्चोदयेदेषा संस्कृतिस्सास्ति मे शुभा।।१३।।
नावसादं व्रजेत्प्राज्ञो नात्महत्यां चरेत्क्वचित्।
उत्साही चोद्यमी भूयाद्वदेन्मे संस्कृतिस्सदा।।१४।।
दयाधर्मोपकारांश्च त्यागरागोचितज्ञताः।
शिक्षयेत्संस्कृतिश्रीकाः वेदशास्त्रादयो मम।।१५।।

***

# चतुर्थपल्लवः
# अभिनन्दनकाव्यानि

## ॥ श्रीमन्मलूकपीठाधिपाभिनन्दनम् ॥

*********

सद्भावामृतसिक्तचित्तमतिमत्सौहार्दपूर्णङ्गुरुं
कारुण्याब्धिनिमज्जितैकहृदयं सारल्यसञ्जीवनं
नानाशास्त्रसुदीप्तियुक्तवपुषा चादर्शसन्दर्शिनम्
श्रीमत्कृष्णपदारविन्दरसिकं वन्दे मलूकाधिपम्॥१॥

वृन्दारण्यसुवासवासितमनश्श्रीराधिकाराधकं
श्रीमद्दिव्यनिवासलोकहृदयप्रीतीष्टशिष्टम्मुनिं
गोविन्दार्चनवन्दनाभिनिरतम्प्रेमाब्धिमग्नञ्यतिं
विद्यालासविलासमोदमतिकेष्टार्थाच्युतम्भावये॥२॥

हे सम्मानविनन्दितैकमतियुग्घे दिव्यलोकङ्गमिन्!
श्रीशार्चाविधिमन्त्रणादिविधिकश्चेभ्यैस्समाजैर्नुत!
विद्वद्वृन्दमहाप्रसन्नहृदये-शाशाभिशास्तश्शमिन्!
कृष्णापूरितपद्धतिं गुरुवरञ्चेडे मलूकाधिपम्॥३॥

हे हे साधुमहात्मनाम्प्रियतर!प्रीतीष्टदार्चासृत!
नानावेदपुराणशास्त्रकथनानन्दान्वितार्थिन्व्रजिन्!
नैकालोकविचिन्तनाब्गतमहातत्त्वाब्धिमग्नप्रभो!
नूनन्नाकतलस्थदेवजनताहर्षो मलूको भवान्।।४।।

कृष्णाकीर्तिकरङ्क्रतुक्रियमहो होतारमीडे हरिं
खाप्पृथ्वीमरुदग्निसारकथनं खात्पारमुद्गामिनम्
गङ्गागोगणनाथगीर्गुरुगतङ्गोविन्दगीताङ्गिनम्
घण्टाकर्णघटोत्कचादिकथनाख्यातारमुद्भावये ।।५।।

पुण्यश्रीपरिमण्डितोऽतिविमलस्साहित्यवारान्निधिः
विद्याश्रीधृतपण्डितोऽखिलविदाम्पूज्यत्वमाशुर्गतो
धर्मश्रीश्रितभक्तियज्ञशरणश्श्रौतक्रियाप्रीतिभाग्
वन्द्योऽहोऽद्य मलूकपीठसरणो राजेन्द्रदासो गुरुः।।६।।

दृष्ट्वा ते भवहारिरूपमधुना नूनं हि धन्यायिता
श्रुत्वा विष्णुगुणानुवादकथनं कर्णौ विशुद्धिङ्गतौ
पीत्वा माधवमाधुरीमिव भवद्दृष्ट्या वयं हे गुरो
नाकं नामृतमन्यदेव भगवन्मन्यामहेऽस्मादृते।।७।।

हे शम्भुप्रियकीर्तन! श्रुतिमतान्धर्मध्वनैर्ध्मायित
हे विद्वत्कवितानुरागिशिववन् हे हेमरूपाच्युत!
हे सद्धाम! विधेर्विधानवशतश्चायात्य भूमण्डले
भ्राजन्तेऽत्र भवादृशः क्वचिदहो विष्णुप्रभामण्डिताः।।८।।

त्वञ्जानासि कथं हि सत्सु चरणं गेयं विधेयञ्च किं
त्वम्भूयो भुवि भावुका इव रसं कृष्णात्मकं सम्पिबन्
भ्राम्येश्श्रोतृजनाँश्च दिव्यकवितापीयूषमापाययन्
त्वन्नूनन्नयवर्त्मवर्तितवपुश्शोशुभ्यसे हे गुरो।।९।।

धृत्वा चापि मलूकपीठशरणं कृत्वा महासत्क्रतुं
ऊढ्वा ग्रन्थशतप्रदत्तकथनीकर्तव्यतानिश्चयं
सोढ्वा लौकिकवञ्चनामपि गुरो! नैवाच्युतं सन्त्यजेद्
इत्येतत्परिशिक्षयन्द्विजगणान्संशोभसे वै भृशम्।।१०।।

संश्रित्यैकहरीशवाक्यनयतां सङ्गीय गीतङ्क्वचित्
सन्दायात्मगुणाँस्तथात्मति वा शिष्येषु सम्मोदसे
संस्कृत्यैव गिरां विचार्य परितश्शास्त्रीयतथ्यावधिं
मञ्चस्थो हरिराट्शुभाशयसृतो संश्रूयसे श्रोतृभिः।।११।।
******

## ॥ श्रीमद्राघवाचार्याभिनन्दनम् ॥

******

धर्मनिष्ठं वरिष्ठं सुशिष्टं मुनिं
क्लिष्टचर्यं शुभेष्टं विशिष्टं पुनः
चेष्टनाभ्यैषणाकृष्टकृष्णं द्विजं
राघवाचार्यमित्याह्वयं भावये।।१।।

धर्मकर्माब्धिरत्नप्रदं शोकहे
राममार्गे जनांश्चोदयन्तञ्च तं
गोखुरीं हो शिखां धारयन्तम्मुदा

राघवानन्दमग्नं हृदा चिन्तये।।२।।

लौकिकभ्रान्तिविध्वान्तविध्वंसकं
वैदिकार्थप्रभावैकवाक्संयुतं
दैवलीलागुणग्रन्थसत्पाठकं
राघवचार्यवर्यन्नुमश्शास्त्रिणम्।।३।।

रामपुर्यां वसन्तं वसन्तश्रियं
रामगुण्यानुवादैकगाथाप्रियं
शास्त्रतथ्यप्रकाशं सदा सद्धियं
राघवाचार्यपादारविन्दं भजे।।४।।

भावये राघवाख्यं सताम्मोदिनं
स्वर्चये साधुवृन्दाकुलं बोधिनम्
कामये सङ्गतिं तस्य वाङ्मोदिनः
पालये राघवीभक्तिबीजं निजे।।५।।

गौड इत्याह्वयोऽहं हिमांशुश्च यश्-
श्रीलबाबागुरोराश्रमेऽधीतवान्
अद्य संश्रुत्य वाणीं भवत्सन्मुखात्
भावपद्यप्रसादो मयीहोदयत् ।।६।।

******

## ॥ श्रीविद्यासागरमहाराजाभिनन्दनम् ॥

************

सत्याऽहिंसनसत्पथप्रचरितेष्वग्रं समग्रं मुनिं
शिक्षादक्षविचक्षणं सुपुरुषैर्वन्द्यं प्रणन्द्यं शुभं
दिव्यानन्दनिमज्जितं द्युतियुतं त्यागश्रियोद्भासितं
विद्यासागरजैनवृन्दविनतं वन्दे तपोरूपिणम् ।।१।।

यत्रानेकविधा: बुधा: प्रतिदिनं शास्त्राणि सन्तन्वते
जैनोद्भासिपरम्परापूतजनैर्मोदं द्रुतं मन्यते
नानायोगविचिन्तकैर्निजधिया तथ्यं विनिश्चीयते
विद्यासागरसद्गुरुर्हि निखिलेष्वर्च्यस्समैरुच्यते ।।२।।

दिगम्बरं शिवाम्बरं विदां वरं श्रियां वरं
धियां विनिश्चितार्थनिश्चयैकचेतृचिद्वरं
सुधाप्रवर्षिहर्षिशास्त्रमुक्प्रणम्ययोगिनं
नुमश्शुभप्रदायिशुद्धचित्तलभ्यशोभितम् ।।३।।

सहस्राधिकैर्धर्मधीभिर्नतो यो
महाज्ञाननिष्ठैर्वृतस्सम्मतो यो
जनाश्श्रद्धया द्रष्टुकामा: गुरुं यं
बुधं तं हि जैनार्चितं चार्चयाम: ।।४।।

मनुष्याणां कल्याणपथसरणस्त्यागशरणः
चिकित्सायुर्वेदादिविविधधियोद्धारकरण:
बुधानां गीर्वाचां मुदितहृदयेन प्रियतमो
नुमो विद्याब्धिं तं विमलमनसा जैनयतिकम् ।।५।।

न वित्तं न कीर्तिं न वाञ्छेच्च भोगं
न माधुर्यमत्तीह नो लावणं वा
करस्थान्नतृप्तिङ्गतो जैनराजः
सदा कीर्तिमीयात्स विद्याधिराजः ।।६।।

सदा सर्वकल्याणदं जैनशास्त्रं
मुदा नित्यनिर्वाणदं वीरशास्त्रं
अहिंसादिसन्दर्शकं धर्मलक्ष्यं
निधृत्येह विद्यामुनिश्शोभतेऽहो ।।७।।

श्वेताम्बरं वापि दिगम्बरं वा
द्वयं समाश्रीयत एव लोके
तयोश्च दिग्वस्त्रधरो मुनिर्यो
विद्याब्धिरूपश्च तपस्विरूप: ।।८।।

दृष्ट्वा विभासितवपुष्कमहं हिमांशु:
जैनेन्द्रकस्य मुनिभि: परिशोभितस्य
विद्यादिसागर इवात्र गुरोर्विभात:
कुर्वेऽष्टकं ह्यमितजैननिबोधितस्सन् ।।

******

## ॥ श्रीमद्-अभिराज-राजेन्द्रमिश्राभिनन्दनम् ॥

*************

नानानाटकवीक्षलेखनिपुण श्रौतादिविज्ञानधृत्
काव्याकाशविभासराज मतिमन् हृद्भावविख्यापक
नूनं ते कवितविलाससुखिनः क्षुन्नैव यान्तीव वा
एवञ्चापि मया पुरा शिखरिणीग्रन्थस्तवालोकितः ।।१।।

काव्यं यच्च महत् प्रशंस्यपदवीं यातं जनैश्शोधकैः
श्रीविष्णोरवतारवामनगुरोः पुण्यप्रभाभासितं
तद्वै भागवताश्रितं च विबुधैर्दृष्टं समीक्षापरैः
भक्त्याऽधीत्य च वामनावतरणं के नैव तीर्णाः भवात् ।।२।।

भवता ग्रथिता विद्वन् शतकानां च सप्तकम् ।
सप्तशत्यभिराजस्य गीयते मादृशैर्जनैः ।।३।।
पञ्चतन्त्रं च रचितं नानासूक्तिभृतं महत् ।
प्रतिभापरमेतद्वै भवद्वैदुष्यदर्शकम् ।।४।।

साहित्यशास्त्रलसितोऽपि विभिन्नशास्त्रं
वेत्तीह यः कविविभातमहाप्रसन्नः ।
राजेन्द्रमिश्र इति संस्कृतलोकसिद्धं
तेजोयुतं प्रतिभयाऽऽदृतरूपमीडे ।।५।।

हे काव्यमार्गपथिक व्यथनापहारिन्
हे चित्तकर्षिकवितावनितेश विद्वन् ।
शैवं गतः कुलपते शिमलानिवासिन्
कीर्तिस्सदैव भवतो जयताज्जगत्याम् ।।६।।

******

## ।। श्रीमद्राधावल्लभत्रिपाठ्यभिनन्दनम् ।।

************

काव्याकाशविराजितो निजधिया सौख्यानि तन्वँश्च यः
राधावल्लभबोद्धृपूजितपदश्शान्तस्सुकान्तो द्विजः ।
नानाशास्त्रविशारदोऽतिविमलस्साहित्यशोधाश्रयः
जीवेद्वर्षशतं भुवीह वचसां वारां निधिर्धीवरः ।।१।।

कोऽयं यो भुवि शारदार्चनरतो लोकस्य कल्याणकृत्
नानादेशविदेशशास्त्रवचनज्ञानप्रसारे रतः
धृत्वा नैकसमैः पदं कुलपतेः संस्थानशास्त्रालये
सद्वागुन्नतिकारकोऽभवदहो तं चेह वन्दामहे ।।२।।

गर्वं नैव गतः पदस्थित उत भ्राजेत सूक्ष्मार्थने
आयूंषीव गतानि यस्य विदुषो वाचां समुल्लासने
तं कञ्चित्त्विह सुप्रसादपरकं नानारसैरन्वितं
राधावल्लभविज्ञशोभितपदं पद्यैर्नमस्कुर्महे ।।३।।

नाहं व्यर्थपदप्रशंसनपरो काङ्क्षे न किञ्चिद्धनं
श्लोकासक्तविभक्तिगानविधिना कुर्वे भवद्वन्दनम्

विप्रस्सान्ध्यसुकर्मणि श्रयति वै भाले स्वके चन्दनम्
सोऽत्राऽस्त्यक्षरधामदायिपदकैर्याति क्वचिन्नन्दनम् ।।४।।

भोश्श्रीसंस्कृतलोकसभ्यपुरुष श्रौतादितत्त्वार्थने
रक्तां वा भवतो विलोक्य मतिमन् सद्भिः प्रसन्नां धियं
ध्यात्त्वा, भोजपुराश्रयिप्रतिभयाऽज्ञानादिभीनाशकं
वन्दे मङ्गलसुस्तवैस्तव शिवार्चाबोधदं सन्मनः ।।५।।

केचिद्वा कथयन्तु को न कुरुते शस्तिं पदस्थे नरे
केचिद्वा मनसाऽऽश्रयन्तु हिमराट् वक्तीव किं स्वार्थतः
केचिच्चाटुवचःप्रसारणपरं जानन्ति मां नैव ते
बुध्यन्तां ह हिमागौड इति नो चाटुत्त्वमीयान्मृते ।।६।।

श्रीमन् द्वेषपरास्समस्तविबुधास्सौहार्दसन्नाशकाः
नान्यस्य प्रकरोति कश्चिदिह वा गर्वङ्गतो वन्दनम्
सर्वे स्वप्रतिभां वदन्ति परधीद्वेषैर्विदग्धा इह
को वा धास्यति हास्यलास्यमधुना सौख्यं बुधानां मिथः ।।७।।

एवं वीक्ष्य मयैव यत्न इह वै सन्तानितो लेखनैः
वन्द्यश्रीरिति वन्दनादिपरको धत्तोऽधुना सङ्ग्रहः
केषाञ्चिद्बुधलोकहर्षितहृदां पादास्समावन्दिताः
(एकत्रैव विभिन्नविज्ञचरितं किञ्चिन्मया दर्शितम् )
येन स्यादभिपूज्यपूजनमहो पारम्परेऽधिष्ठितम् ।।८।।

******

हिमांशुर्गौडो,गाजियाबादस्थगृहे।
लेखनसमयो दिनाङ्कश्च – १:३० मध्याह्ने, ०७/११/२०१९.

# ॥ श्रीमच्चन्द्रकिरणसलूजाभिनन्दनम् ॥

*************

स वै भाषाशास्त्री सुरवचनशीलो मधुरवाक्
स शिक्षालोकाऽऽलोकसरणसुशीलो विलसति
नवं तथ्यं भाषागतमपि विचिन्त्यार्थपरकं
सलूजावर्योऽयं बुधजननतश्शान्तवपुषा ।।१।।

क्वचिद्धास्यैः भाष्यैः विमलमतिरत्यन्तसुखभृत्
क्वचिद्गम्भीरो वाङ्निलयवसतिर्नैकरसमुत्
सरस्वत्याः शौक्ल्यं शिरसिजगणैर्ज्ञापितमिव
सलूजाश्रीः मान्यो धवलकिरणश्चन्द्रकिरणः ।।२।।

अहो वार्तामध्ये विविधपरिहासातिचतुरः
प्रमोदैर्वृत्तान्तैस्सकलजनतातुष्टिकरणः
निजज्ञानोद्भासाऽखिलजननतश्चिन्तनरतः
सलूजाश्रीः नम्यो बहुगुणयुतश्चन्द्रकिरणः ।।३।।

स्वसारल्यैः ख्यातस्तप इव चरन् वृद्धतनुषा
सदा दैवीभाषाप्रचरणसुयत्नोऽपि बहुवित्
मुहुर्भाषाभेदान् वदति बहुदर्शैरपि च यः
प्रशंस्यस्सर्वेषां जयतु स सदा चन्द्रकिरणः।।४।।

स सौजन्योदार्यैः परहितरतोऽहो सहृदयः
सभाभिर्यात्राभिः पठनपरगोष्ठीभिरथवा
स गीर्वाणुन्नत्यै भ्रमति जगति श्रीककिरणः
गुणोत्कर्षैर्वन्द्यो परगुणविमुञ्चन्द्रकिरणः ।।५।।

******

लेखनसमयो दिनाङ्कश्च – १२-२१ मध्याह्ने, ३०-०६-२०१८,
दिल्ल्याम् ।

******

## ॥ स्वर्गश्री-इन्द्रमणित्रिपाठ्यभिनन्दनम् ॥

*************

यो वै व्याकरणादिशास्त्रधृदपि श्रौतं सदा धारयन्
तत्त्वं शैवमितोऽपि शुद्धहृदये धृत्त्वा बुधत्त्वङ्गतः
सत्यं वाचि च निष्ठयापि सकलं यो जीवनं संसरेत्
तं वै श्रीन्द्रमणित्रिपाठिविबुधं भक्त्याऽभिवन्दामहे ।।१।।

यो वा श्रीमदशेषशेषशयनश्श्रीविष्णुराडच्युतः
वेदैर्वन्द्यवपुश्च मोक्षकरणः क्षीराब्धिवासो हरिः
तद्भक्तिर्भवभीविनाशकरणी बैकुण्ठदा सत्यदा
सर्वे चैव चरन्तु तां च नवधामिन्द्रो मणिर्बोधयेत् ।।२।।

ग्रामे चास्य पुरेऽपि शास्त्रिण इमे गाथाः नवाः भक्तिदाः
गायन्तीह जनास्सुहर्षनिभृताः सम्मानचित्तेन वै
श्रीमानिन्द्रमणेर्विचारशुभतां प्राप्याऽधुना तज्जनाः
स्मृत्त्वा चेन्द्रमणिं हरेर्गुणगणान् मोदाम्बुधौ मज्जिताः ।।३।।

यश्श्रद्धां विदधाति भक्तपुरुषश्शम्भौ स्वकीये गुरौ
नूनं तस्य भवन्ति सौख्यलतिकास्सस्यैर्भृताः पुष्पिताः
एवं श्रीरघुवंशमिश्र इति यश्शिष्योऽस्ति वै शास्त्रिणः
साफल्यं गतवान् गुरोश्च कृपया प्रेम्णेन्द्रवर्यस्य च ।।४।।

धृत्त्वा वा हरिओमपौत्रजनितं स्नेहं मुदा तिष्ठति
भाले चन्दनमद्य किं न धृतवान् निश्चन्दनं पृच्छति
शैत्यं चात्यधिकम्मयोषसि नहि स्नानं कृतं सूचिते
किञ्चिद् रुष्ट इव त्रिपाठिपुरुषो बालाय संस्कारदः ।।५।।

यो वै जीवति शास्त्रसारिमनुजो लोकद्वये सौख्यभाक्
भूयात्तद्धि बुधैस्सदा निगदितं , तद्वत् त्रिपाठी वरः
पुत्रौ द्वौ च सुरेन्द्रनामकजनो श्रीमान्नरेन्द्रोऽपरः
जातौ शिक्षणकर्मकाण्डनिपुणौ भक्तौ कुलालम्बिनौ ।।६।।

ज्येष्ठस्याथ सुरेन्द्रस्य चतस्रः कन्यकाः तदा ।
एकश्चैव सुतो जातः पितुर्मोदप्रवर्धकः ।।७।।
श्रुतिकीर्तिश्च वै ज्येष्ठा हरिओमस्ततोऽनुजः ।
नन्दिनी च ततो जाता ततश्चैव स्वतन्त्रिका ।।८।।

नारायणीति विख्याता, सुता आनन्ददा अपि ।
नरेन्द्रो यो मणिः ख्यातः सुरेन्द्रस्यानुजोऽस्ति यः ।।९।।
अखण्डज्योतिरस्यास्ति पुत्री ज्येष्ठा सुखप्रदा ।
दिव्यज्योतिस्ततो जाता ध्रुवश्चैव तृतीयकः ।।१०।।

एवं श्रीशास्त्रिवर्यस्य पुष्टा कुलपरम्परा ।
अहो नूनं हि सम्मोदं प्राप्नुवन्ति सतां सुताः ।।११।।
महात्मनां च विप्राणां संस्तुतौ लग्नधीस्सदा ।
शैवे काव्ये स्वमोदे च पुण्यभाग्भाति भूतले ।।१२।।
******

## ॥ समर्थश्रीस्वामी नयनपथगामी भवतु मे ॥

*************

क्वचिद्विष्णोर्गाथां क्वचिदपि च रामस्य भजनं
क्वचिच्छैवीचर्चां क्वचिदथ कपीशस्य चरितं
क्वचिद्देवीलीलां बहुविधपुरेषु प्रतनुते
समर्थश्रीस्वामी नयनपथगामी भवतु मे ।।१।।

हिमांश्वीशस्य श्रीशुभचरितशम्भोश्शिवकरे
हिमाभे कैलासे हरचरणसेवाप्रमुदितः
हिमांशो कुत्राऽसि प्रवदति विलोक्यापि कविताः
समर्थश्रीस्वामी नयनपथगामी भवतु मे ।।२।।

अहो नानाकार्यप्रतिरतजनव्यस्तगतिता
मुहुः क्लेशव्याधिश्रिततनुभृतां जीवनमिदं
सदैवैकं ज्ञेयं शिवमिति च तत्त्वं वदति यः
समर्थश्रीस्वामी नयनपथगामी भवतु मे ।।३।।

क्वचिद्दिल्लीदेशे नरवरधरण्यां दशसमैः
क्वचिद्भोपाले वा प्रकृतिकृतदृश्यैश्च शुभयाः
स वाऽस्मत्तश्श्रेष्ठो यतिरहमवोचं नृसदसि
समर्थश्रीस्वामी नयनपथगामी भवतु मे ।।४।।

समाश्रित्य श्रीमत्प्रबलचरणानाञ्च सुबलं
मुदाऽऽधृत्य श्रौतश्रितविविधयज्ञस्य शरणं
कवित्त्वैः धर्मत्त्वैः जगति सुखदत्त्वं व्रजति यः
समर्थश्रीस्वामी नयनपथगामी भवतु मे ।।५।।

******

लेखनसमयो दिनाङ्कश्च-१४-०४-२०१८, २.०० अपराह्णे ।
स्थानम्- गाजियाबादस्थे स्वगृहे ।

******

## ।। श्रीब्रजभूषणौझाभिनन्दनम् ।।

************

काश्यामधीत्य पुरुषो गुरुरामयत्नात्
नागेशभट्टसृतशास्त्रविशिष्टविज्ञो
विद्वत्सभागतजनो जयतात् समस्तान्
शब्दप्रथाप्रचरितब्रजभूषणौझा ।।१।।

संस्थान इत्यभिहिते सुरवाक्स्थले चा-
ऽप्यध्यापयन् पदविवेकपरं हि शास्त्रं

छात्रप्रियैकपदवीमभियातवान् यः
सच्छाब्दिको विजयते ब्रजभूषणौझा ।।२।।

ओझेति नाम पदवित्प्रथितं प्रदेशे
श्रुत्वा मुदं भरति तत्सुहृदां गणश्च
आयातवान् सदसि चेति निशम्य दुष्टाः
शास्त्रार्थिनो भयवशाच्च ततो व्रजन्ति ।।३।।

शैवप्रसारशरणो[12] बुधसङ्गकाङ्क्षी
यो वा कविप्रियसुगायकमोदितश्च
योऽहो बिहारिपुरुषप्रियगुण्यरागी
सर्वत्र हर्षतु स वै ब्रजभूषणौझा ।।४।।

यः कीर्त्तिकाम उत वित्तसमुत्सुकोऽपि
शास्त्रं जहाति न कदापि च लोकलग्नः
काशीमठेषु परिपाठयति द्विजान् यो
हृष्टाः भवन्ति पुरुषा अवगम्य ओझाम् ।।५।।

स्थूलोऽपि सूक्ष्ममतिराह च सूक्ष्मतत्त्वं
स्थूलोदरार्चकजनो भजति स्मरारिं
गोष्ठीगरिष्ठपुरुषप्रियशिष्टरूपः
सम्मान्यशोधपरको ब्रजभूषणौझा।।६।।

---

12 यो रागिनीप्रियबुधो इति पा.

भोपालदेशबुधभाष्यविशिष्टवक्ता
रम्यार्थसत्प्रकृतिजुष्टसुतुष्टसक्तः
शिष्यावृतो द्विजनतो गुरुतोषदक्षः
ह्यध्यापनेऽतिकुशलो ब्रजभूषणौझा।।७।।

विद्वत्तया चकित एव स रामदेवः
ओझां प्रशंसति जनेषु सुधीप्रियो यः
सर्वत्र स्वप्रतिभया पदसिंह उक्तो
यस्तं नुमो बुधवरं ब्रजभूषणौझाम्।।८।।

स्मारं स्मारं वपुस्तस्य रात्रावोझां पदार्थगम्।
अष्टकं लिखितं चैतद्विद्वल्लोकङ्गमस्य वै ।।

******

## ।। श्रीकैलासदाशाभिनन्दनम् ।।

*************

जगन्नाथदेशे प्रजातं सुविप्रं सदैवोत्कलत्त्वेन दाशं प्रसिद्धम्
स्वकां संस्कृतिं तत्त्वतो वेदयन्तं विदन्तं श्रमन्तं नमन्तं नमामः
।।१।।
विधानार्थविद्वा प्रधानार्थविद्वा समाधानवित् शब्दसिद्धान्तविद्वा
तमेवं श्रुतीहासमुद्रक्तचित्तं विभक्तं च शास्त्रे सदा सुस्मरामः
।।२।।
न सोऽस्यत्यत्र विप्रो न यो दाशशब्दैर्विषण्णः प्रसन्नो भवेद्वा नवाशः

अहो शास्त्रविद्भिर्ध्रुवं सत्यमुक्तं प्रमोदङ्करो नो हि कैलासदाशः
।।३।।
य आग्लं विजानाति देवार्थवाचं स्वराष्ट्रीं च मात्रोत्कलं वा विवेत्ति
स राष्ट्र्याख्यसत्पत्रिकाशोधकर्ता मुदा शोधमार्गप्रदर्शी विभाति
।।४।।
प्रसन्नं सदाशं विभाषाविवेदं विभेदप्रवक्तारमीडे सुभाषम्
सदा विष्णुमार्गो रमानन्दपुण्ड्री हरेर्दीक्षया पूतचित्तस्सुवित्तः
।।५।।
समां कौमुदीं सज्जनान् पाठयेद्यस्तिङन्तं सुबन्तं कृदन्तं समासम् ।
हताशो मुदाशस्सुभासो भवेद्वा यदा दृश्यते विप्रकैलासदाशः
।।६।।
क्वचिद्वा नवत्त्वैर्लसेद्विप्रवर्यो नवं वेशमाधृत्य यानप्ररूढः ।
तदा नव्ययूनां प्रहर्षङ्करोऽसौ मुदा वृष्टिभिस्तृप्तिमेतीह चित्तैः
।।७।।
पिबेद्यश्च कॉफीं न चायं कदाचित् सदौदार्यसौहार्दसौजन्यमान्यः ।
न वाऽऽत्मप्रकर्षप्रदर्शेष्टशिष्टो विशिष्टार्थवित्संवृतो भाति विज्ञः
।।८।।
लेखनहेतुः -
सदा सज्जनप्रेमपूर्णा हि वाणी स्रवेन्मन्मुखादित्यहोऽहं प्रशस्तम् ।
समस्तं सुविन्यस्तवाक्याश्रयान्तं समुद्भासवित्कासमुत्कर्षमीहे
।।९।।

लेखनसमयो दिनाङ्कश्च – १०.५० रात्रौ , १८-०७-२०१९,

बृहस्पतिवासरे, गाजियाबादस्थे गृहे ।

******

# ॥ श्रीगोपेश्वराभिनन्दनम् ॥

************

विद्वच्छ्रिते नरवरे हरिशास्त्रसक्त:
यो वृद्धिकेशिशिवधामनि चानुरक्त:
बाबागुरौ श्रुतिमतीव हृदा प्रसक्त:
गोपेश्वरो विजयताद् ब्रजधामसक्त: ।।१।।

सङ्कर्षणाख्यफणिराट्-निलयाधिवासी
श्रीकृष्णशेषबलरामपदाभिलासी
नानासुरार्चनरतद्विजकर्मभासी
गोपेश्वरो विजयतात् शिवताभिलाषी।।२।।

खादेत् सदैव विजयां शिवधृत्प्रसादं
गच्छेच्च यामुनतटे हरिभक्तिमेतुं
श्मश्रूधरो शुभवपुर्द्विजमित्रमानी
गोपेश्वरो विजयताद्दवि भक्तियुक्त:।।३।।

गम्भीरवाक्च शिरसा धृतपीतवस्त्रो
धर्माहवाय भवताद् धृतमन्त्रशस्त्र:
संसारशत्रुदहनाय हरानलास्त्रो
गोपेश्वरस्स्वरनये स्वरतात् समन्तात् ।।४।।

गोपप्रियप्रियतरस्तरणप्रियश्च
गोवत्सपालनकरप्रियदेवलश्च
गङ्गां च गां गुणगिरा गमयेद्गुणान् यो
गोपेश्वरेश्वरजनो जनमान्यविप्र:।।५।।

श्रीमण्डलेश्वरविमण्डितभाण्डरूपो
माण्डूक्यतण्डुमुदहो धृतशास्त्रकण्डु:
भूमण्डलस्थहरिकाण्डविमण्डितोऽसौ
काण्डर्षिकाण्डनिपुणं गुणयेम कश्चित्[13]।।६।।

******

## ।। श्री-अभिनन्दनाभिनन्दनम् ।।

*************

स वायुयानचालनातिदक्षसक्षमाक्षिमान्
स देशभक्तिभावनाभरो नरोऽथ वीर्यवान्
स नैकभाषविच्च शत्रुवित्परज्ञबुद्धिमान्
अतो वयं प्रकुर्महेऽभिनन्दनाभिनन्दनम् ।।१।।

बिभेति नैव योऽरिदेशगोऽपि यातनागत:
समेति निर्भयस्स्वदेशरक्षणाय चाहवे
उदेति यस्य मानसे नवा च नीतियोजना
प्रकुर्महे ह्यतोऽभिनन्दनाभिनन्दनं वयम् ।।२।।

रहस्यमात्मगुप्तमाविधाय यश्च तिष्ठति
विमानदुर्घटादितश्च रक्षति स्वकं वपु:
महत्त्वपूर्णकार्गदान् स भक्षयेद्रिपुश्रित:
अतोऽस्य चातुरीभृतोऽभिनन्दनस्य वन्दनम् ।।३।।

---

13 (काण्डर्षितण्डुलमुदं गुणयेम पुण्यम्) इति पा.

स निर्भयो ददाति पाकपृष्टशिष्टकोत्तरम्
निषिध्य चापराँश्च भारतस्य गौरवं धरन्
समस्तदेशवासिभिस्सुमानित: प्रमाणित:
प्रकुर्महे प्रणम्यसच्चरित्रकाभिनन्दनम् ।।४।।

स चायपोऽपि देशपो विदेशगोऽभिलक्ष्यते
स शत्रुहा विभिन्नशस्त्रकास्त्रचालनप्रवित्
स निर्दयघ्नवीरगण्यसाधुप: पपीप्रियो
ह्यतो वयं प्रकुर्महेऽभिनन्दनाभिनन्दनम् ।।५।।

******

## ॥ श्रीमच्चन्द्रशेखराभिनन्दनम् ॥

*************

सदाऽनुशासनप्रियो बुधैकभाषणप्रियः
सतां मुदाऽनुशासिभाषिसत्प्रकाशनप्रियः
अहोऽप्यनेकशास्त्रधृद्विशिष्टचिन्तनप्रियः
स शास्त्रिभिस्सदा स्तुतश्च चन्द्रशेखरप्रियः।।१।।

सदा हि यस्य कामना समोन्नतिप्रवर्धिनी
मुदा हि यस्य चिन्तनं च शास्त्रमार्गसेवनं
हृदानुभावना च भूतभावनेशभाविनी
तमेव चन्द्रशेखराश्रयं नुमो बुधैर्वृतम् ।।२।।

यथा गुणैर्हिमांशुरीशमस्तके सुशोभते

यथा निशापतिश्च सुन्दरोऽथ लोकरञ्जकः
तथा द्विजैश्च चन्द्रशेखरो बुधैर्गुणाग्रही
मतो धृतस्स्तुतो हिताय चन्द्रशेखरं नुमः ।।३।।

सदा स्वजीवने पृथग्विचिन्तनैर्द्विजश्च यः
प्रभाति दर्शनैकमार्गसेवनश्च धीरधीः
विशिष्टसङ्गतागतोद्धृताम्बुभावमज्जितो
नुमश्श्रिया धियाऽऽवृतं च चन्द्रशेखराभिधम् ।।४।।

गुणाश्रयैः प्रशंसितश्शुभाश्रयैश्च नन्दितः
गुणप्रसादमानसः कविप्रसादमानसः
सदैव वेदशास्त्रचर्चनैश्च मोदभृद्विजो-
ऽनुशासनैकजीवनाश्रितश्च चन्द्रशेखरः ।।५।।

सदा हि चन्द्रशेखरे रतिर्हि यस्य वर्तते
श्रियां सृतैकचन्द्ररूपणेऽपि यस्य सम्मतिः
अहो स चन्द्रकान्तिकान्तकाञ्चनाऽञ्चनान्वितः
सुचारुचन्द्रचित्तचौरचन्द्रशेखराभिधः ।।६।।

चमत्करोति चञ्चलाञ्चितैकचित्तसंश्रितान्
चितस्स्वमानसप्रवृत्तिचारुचित्रणैश्च यः
चलाचलेषु चञ्चलन्मनःप्रमोदधारिणां
गभीरधीरभावबोधनश्च चन्द्रशेखरः ।।७।।

******

# पञ्चमपल्लवः

# श्रद्धाञ्जलिकाव्यानि

## ।। स्वर्गताय स्वपितामहाय श्रद्धाञ्जलिः ।।

## (पण्डितटीकारामशर्मणे)

*************

स्याच्च मिष्ठान्नमन्नं फलं चौषधं माणवप्रीतिखाद्यानि स्नेहैस्सदा
यो ह्यदान्नित्यशो बाल्यकाले पणं, तं च टीकाभिधं स्वर्गमुद्भावये
।।१।।

सदा हि यस्सुखास्यलास्यपूजितस्स्वभावतः
पुरे समस्तसज्जनैश्च पण्डितार्थमण्डितः
दिने दिने हरेस्सहस्रनामजापकश्च यः
श्रमाश्रितं श्रियाऽन्वितं स्वकं पितामहं भजे ।।२।।

अशीतिवत्सरायुषीव यश्श्रमं महत् पुनर्-
दधाति, संस्कृतीक्षणे विचक्षणो विलक्षणो
द्विचक्रयानचालनैश्च दूरमेति यो गुरुस्-
तमेव सुस्मराम्यहं पितामहं सुरार्चकम् ।।३।।

विवाहकारणाय वा सुताभिधानहेतवे
मुहूर्तदर्शनाय वा तिथिप्रबोधनाय वा
त्रयोदशाहकर्मकारणाय याजनाय वा
प्रयान्ति यं द्रुतं जनाः स्वकं पितामहं भजे ।।४।।

मृदुवाक्ययुतं सरलं विरलं सुरवत् पुरुषैश्च मतं सकलैः ।
स्वपुरोहितकर्मगुणैः प्रथितं स्वपितामहमद्य भजे सततम् ।।५।।

मिष्ठान्नापणके यदाहऽमथवा मिष्ठान्नपानादिकं
पश्यामि स्म न चित्तरोधकरणे शक्तोऽभवं प्रायशः
टीकारामपितामहस्स च सदा मह्यं समं क्रीतवान्
तस्मात्प्रेमयुतं ममापि निखिलं हो बाल्यकालं गतम् ।।६।।

स्नेहासिक्तमहं न वर्णनगुणे शक्तः क्वचित्तस्य वै
सभ्या सौम्यचरित्ररूपणकथा ग्रामे प्रशंस्या समैः
श्रीमान् योऽप्यथ कर्मकाण्डनिपुणो लोके प्रसिद्धिङ्गतः
टीकारामपितामहो मम गुरुस्तं भावये श्रद्धया ।।७।।

भावोदयो मे मनसि प्रजातः लिखामि तेन प्रतिचोदितस्सन् ।
पितामहो द्वादशवर्षपूर्वं धर्मप्रसारी दिवमाप्तवान् सः ।।८।।

******

लेखनसमयो दिनाङ्कश्च – १०-२० रात्रौ १७-०७-२०१९

गाजियाबादस्थे गृहे ।

******

# ॥ पितामहीश्राद्धावसरे तत्स्मरणम् ॥

## (श्रीमतिकमलादेवी)

************

या मे बालककालपालनकरी चाद्या सुशिक्षाप्रदा
स्नेहासिञ्चितमानसा सहृदया या भावुकी निश्छला
गार्हस्थ्यप्रतिपालनेऽतिचतुरा श्रद्धास्पदा सा सदा
वन्द्या श्रीकमलावतीति जनकाम्बा तां नमाम्यद्य वै।।१।।

आदर्शादरसून्नता च वचसां मेघैर्मुदा वर्षति
अन्या: या महिला: स्ववाक्पटुतया मौने समापातयेत्
या वै जीवनहर्षरूपमहिता स्पष्टैकसम्भाषिणी
निर्भीका ह पितामही मम हरेर्धामायिता श्रीवृता।।२।।

तीर्थे भक्तियुता व्रजेद् , हरिकथानन्देऽपि या मज्जिता
नानासूक्तिमती तथाऽनुभविनी या वै श्रमैर्भूषिता
पातिव्रत्यमहो निधाय चरिते धन्यत्त्वमाशुर्गता:
श्रद्धाभिश्च पितामहीमहमिहोद्भाव्य प्रणौम्यच्युतम् ।।३।।

या वै ग्राम्यकथाविबोधकरिणी संश्रावयेत्सत्कथा:
नानाज्ञानविभूषितैकहृदया देवीविभक्तौ रता
धर्म्यान् या नियमान् त्यजेन्नहि यथाबोधा समृद्धा मम
तस्या आशिषमर्थयन् कविरसौ श्राद्धे स्मरेदम्बिकाम् ।।४।।

या मां प्रेमतया स्म पश्यति सदाऽसद्वं च वै भर्त्सयेत्
कार्याकार्यनिबोधिनी हृदयजान् वेत्तीव भावाँश्च या
सा संवेदनशीलमानसयुता निम्बामृता कर्मठा
गौडस्तां स्वपितामहीं तिलजलैस्सन्तर्पणे संरत: ।।५।।

एकादशीव्रतरता हरिपूजनेन
स्वप्नाऽशुभाशुभफलं च विवेचयेद्या
वेत्ति स्म वै प्रकृतिजं शकुनादिभावं
सद्भावनाऽमृतयुता हि पितामही मे ।।६।।

गोदोहकाल इह गायति या प्रभाते
श्रीपार्वतीश्वरकथां शुभतां सरन्ती
बाल्ये निशम्य जन एष विवर्धितोऽस्ति
तस्या: मुखाच्छुककथां, हृदि संस्थिता मे ।।७।।

उत्थाय या दिनमुखे गृहमार्जनानि
पश्वादिपालनमहो कुरुते स्म सम्यक्
पश्चाद्गृहे चरति गोमयलेपनानि
दृष्टानि बाल्यसमये दधिमन्थनानि ।।८।।

नास्तीह तद्वदधुना गृह एव कार्यं
पक्वेष्टिकाविरचिते नवतामिवैते

नैवं श्रमो न च तथा सुखता विभाति
माङ्गल्यमेव सुकृतैः, न धनैर्लभेत ।।९।।

******

लेखनसमयो दिनाङ्कश्च - ११:३८ पूर्वाह्ने, २१/०९/२०१९

******

## ।।अलीगढस्य श्रीगिरीशचन्द्रपण्डिताय श्रद्धाञ्जलिः।।

*************

हिमांशवे ददातु चायमस्ति कोऽपि वा गृहे
किमस्ति दीप्तिरत्र पङ्कजोऽथ सौरभाम्बिके
इति प्रमोदवाक्यभृत्स भूतभावभावनो
गिरीशचन्द्रपण्डितो दिवङ्गतो दिवङ्गतः।।१।।

पिता स सौरभस्य सर्वदैव सर्वसुप्रियः
शिवाभिकामिदेवभक्तिचोदको विमोदको
द्विजानपि स्वपुत्रवत्स मन्यते गृहागतान्
गिरीशचन्द्रपण्डितो दिवङ्गतो दिवङ्गतः।।२।।

सदा स साङ्गवेदवासिपण्डितैः प्रशंसितः
मुदा स वेदवाक्यभृद्विजैर्मुहुस्सुमानितः
स मह्यमाशुतोषदस्स मह्यमाशुपेयदः
स शर्मसौरभस्य हा पिता दिवङ्गतश्श्रुतः ।।३।।

सदा हि मेऽप्यदाद्धितानुकारिवारिभैषजम्
मुहां विचारखण्डनैस्सतां प्रमण्डनैश्च यः
हिमांशुरेव चात्र शाब्दिकोऽस्ति नेतरे द्विजा
अहोऽवदत्स शास्त्रिभिस्सुमानितो दिवङ्गतः।।४।।

स सौरभाय सर्वदा हितैकसन्निदर्शनै-
रदाज्जगत्सुशिक्षणं ह्यसत्सतोश्च चिन्तनम्
हरीगढेऽपि[14] तज्जनस्य याऽस्ति कर्मकाण्डिता
स सौरभस्य तत्पितुः परिश्रमैश्च सम्भवा ।।५।।

अहो बुधाश्च सज्जनाः दिवम्प्रयान्त्यहर्निशम्
अहो प्रवर्धते द्रुतञ्च शास्त्रहानिरर्थदा
स भीमसेनपण्डितस्य सत्सुतोऽम्बिकाशिव-
प्रपूजको गिरीशचन्द्रपण्डितो दिवङ्गतः।।६।।

न मित्रशत्रुभावना सदा समत्वचिन्तना
न दर्शयेच्च वा महानिव स्ववेशमण्डनम्
स सत्यरूप-विप्र-दर्शनैकजीवनाश्रितो
गिरीशचन्द्रपण्डितोऽद्य हा दिवङ्गतश्श्रुतम् ।।७।।

---

[14] हरीगढोऽधुना अलीगढ इति ख्यातः ।

स नन्दिना स सोनुना स पङ्कजेन वा सह
सदाऽम्बिकानिशा-सुजागरेषु याति भक्तिभिः
सदोत्सवे पुरेषु देवगीतगायकश्च यो-
ऽप्यहो समस्तविप्रवृन्दसुप्रियो दिवङ्गतः।।८।।

इयं श्रद्धासरी तेषां स्मरणेनैव कल्पिता ।
सद्गतिं यान्ति विप्राश्च सरलाः भक्तिभाङ्नराः।।९।।

******

## ।।। श्रीप्रबलमहाराज-स्मृतिः ।।।

*************

यो वै श्रीकरपात्रदर्शितमखश्श्रद्धाङ्गतो विप्रमुत्
विद्वद्वैदिकपूजनादिविधिभिर्नानाक्रतुश्रीयुतः
श्रुत्वा यस्य च नाम मे स्मृतिपथे यज्ञो ह्युपस्थीयते
तं श्रीमत्प्रबलाधिराजपदवीप्राप्तं नमस्कुर्महे।। १।।

कुम्भारम्भ उतारभन्त इति वा यस्योत्सवा शास्त्रजाः
सम्पूर्णादथ भारतादपि बुधाः आयान्ति हृष्ट्वा द्विजाः
शाक्तं वा शिवनामयज्ञकरणं नारायणस्याध्वरम्
सर्वं श्रीप्रबलाधिराजकृतसङ्कल्पैश्च संसाधितम् ।।२।।

यज्ञो यज्ञ इति प्रसाददिशया सर्वासु दिक्ष्वेव यः
शब्दो विप्रसुमण्डले नरवरे सङ्गुञ्जितो हर्षणैः

सर्वे ते बटुकाः प्रसन्नमनसा नृत्यन्ति गच्छन्ति च
मालाकम्बलपात्रपुस्तकलसत्स्यूतं निधाय क्रतौ ।।३।।

क्वचिद्वा प्रयागे हरिद्वारगङ्गा-तटे यामुने वाऽथ दिल्लीप्रदेशे
क्वचिद्गुर्जरे बङ्गदेशे कदाचित् सुकाशीप्रकाशे कृतस्सत्क्रतुश्च ।।४।।

क्वचिल्लक्षचण्डी क्वचित्कोटिचण्डी
क्वचिद्वेदमन्त्रैश्च लक्ष्मीसुवृष्टिः
क्वचिद्रुद्रपाठैस्समाशोभिताः हे
सखे सन्मखाः कारिताः विप्रमुख्याः।।५।।

क्वचित्पीतवस्त्रैः क्वचिद्रक्तवस्त्रैः मुदा धावमानैश्च तिष्ठद्भिरेवम् ।
सुविप्रैस्तथा याज्ञिकैश्शोभमानं क्रतोः मण्डपं तत्सदाऽक्ष्णोः पुरो मे
।।६।।
मखध्वजैश्शतैर्विराजितेऽध्वरस्य मण्डपे
सहस्रमन्त्रगुञ्जनैरहो सहस्रपूजकैः।
समस्तलोकनायकश्रुतीड्यकर्मराजका-
ऽर्चनैर्धराऽखिला सनातनायिता हि येन वै ।।७।।

आचार्यता स्याच्च दिवाकरस्य यद्वाऽप्यथ श्रीधरणीधरस्य ।
सुयोग्यविप्रस्य सदा नियुक्तिः यज्ञे स्वके श्रीप्रबलैर्विधत्ता ।।८।।

अहो शोभायात्रापथगतजनाः ये सुमतयः

पुरस्त्रीणां मूर्धोल्लसितजलकुम्भस्य ततयः
पुरस्तात् शोभन्ते शिवमतगताः नैकयतयो
मखे येषां, तेभ्यः प्रबलचरणेभ्यः प्रणतयः ।।९।।

रथे स्थित्वा शङ्खध्मपुरुषशब्दप्रमुदिताः
मुहुर्धर्मायन्ते नभसि जयघोषैश्च जनताः
जनैः क्षिप्तैः रङ्गैः श्रुतिबहुविरङ्गप्रकटनैः
क्रतोश्शोभायात्रा शुभगतिनिदर्शैर्विजयते ।।१०।।

नमामि श्रद्धाभिः प्रबलमखकृच्छ्रौतपथगं
शृणोमि स्नेहेन प्रबलमुखतो हर्षदवचो
रमेऽहं श्रीके वै प्रबलसुखजीव्यप्रदगतौ
शिवाप्तौ तेषां श्रीप्रबलचरणानां व्रतजुषाम् ।।११।।

अभिवजति जनो वै यो भुवो यज्ञकर्ता
द्विजकुलतुलसीनां यो गवां रक्षकश्च
ध्रुवमपि हरिशम्भुब्रह्मलोकाभियायी
प्रबलसुकृतभोगं प्राप्नुवन् शास्त्रमार्गी ।।१२।।

कर्ता कारयिता यश्च यज्ञानां विज्ञपोषकः।
विप्राणां हितकारी श्रीप्रबलाख्यं नुमो वयम् ।।१३।।

इयं श्रद्धासरी तेषां स्मरणेन प्रकल्पिता ।

द्वादश्यां कृष्णपक्षे च मार्गशीर्षेऽर्धरात्रिके ।।१४।।
लिखिता चायपानान्ते स्मारं स्मारं च तद्वपुः।
यज्ञमार्गः प्रशस्तस्स्याद्भूतले कामये शिवम् ।।१५।।

******

## ।। दिवङ्गतेभ्यश्श्री-इच्छाराम-द्विवेदिभ्यश्श्रद्धाञ्जलिः ।।

*************

यस्स्वेच्छयैव सरति स्म च शास्त्रमार्गे
विद्वज्जनप्रणतिमोदलसद्विभाधृत्
श्रौतामृतामृतवपुःपुरविज्ञमुख्यश्-
श्रीच्छाद्विवेदिविबुधो दिवमाप्तवान्सः।।१।।

सन्नुस्स नीस्सनकवित्कविताविताानः
सुन्नीशियागतपथप्रथितावधानः
मुन्नीर्मुनिर्मुनितरुप्रियसंविधानश्-
चिन्नीश्च चुन्नयचमत्कृतिचित्प्रधानः ।।२।।

इच्छाकृताखिलजगद्विनियामकस्य
चिच्छाययापि पुनरेव विभासितस्य
पृच्छाप्रदातृपुरुषस्य पदारविन्दे
श्रीच्छाद्विवेदिविबुधो न जहाति रक्तिम् ।।३।।

मूर्च्छाहरस्य च हरस्य चराचरस्य
हूर्च्छाहरस्य विहरस्य स्वराश्रयस्य
श्रीच्छाकरस्य सुकरस्य पदाम्बुजे वै

इच्छाद्विवेदिविबुधः प्रददाति चित्तम् ।।४।।

कृच्छ्रातिकृच्छ्रविधिधृच्छ्रुतिवित्समिद्धृद्-
वृद्धातिवृद्धपुरुषाख्यविशिष्टमुद्धृत्
शुद्धातिशुद्धजलवत्प्रतिबुद्धयुद्धे
श्रीच्छाद्विवेदिविबुधो जयतात्सदैव ।।५।।

हिमांशुर्गौडविप्रोऽसौ श्रीच्छारामद्विवेदिने ।
उररीकृतभक्त्यैव चाद्धा श्रद्धाञ्जलीयते ।।६।।
******

## ।। स्वर्गतायाऽस्मत्सुहृदे- भानुशर्मणे श्रद्धाञ्जलि।। :

*************

दु:खाश्चर्ययुतोऽभवं नरवरात्प्राप्ता च या सूचना
तां श्रुत्वा हृदयं विदीर्णमिव मे चित्तस्य शून्या गति:
किं वाऽयानि गृहे भवानि करवाणीति श्रितं नो मया
स्वास्थ्याऽस्थैर्यवशात्पुनस्स्वसदने तिष्ठामि मौनैरहम् ।।१।।

यो वै स्वच्छहृदा मुदा वसति च श्रद्धायुतो हार्दिको
मित्रैकप्रियसौख्यभावरसिको ज्येष्ठप्रणामङ्करो
व्यायामप्रियवाद्यवादनपरस्सङ्गीतवित्सर्वमुत्
हास्याद्युल्लसितोऽधुना नरवरे भानुस्स हाऽस्तङ्गत: ।।२।।

मैत्रीं यान्ति समे विलोक्य पुरुषं तं वै प्रसन्नाननं
श्रीबाबागुरुराश्रमे तमधिकं प्रेम्णा निवासं ह्यदात्

हेमन्तो विनय: प्रभात इति ये तेनैव सम्मोदिता:
सोऽस्मद्धार्दिकभावभाविलसितो भानुर्हि नाकं गत: ।।३।।

सम्मानप्रियविप्रवृन्दसुवृतं हास्यैर्भृतं जीवनं
गङ्गातीरसुसेवनं शिवगुरुच्छायाश्रयि श्रीकरं
हा हाऽकालदिवङ्गतस्य सुहृदो नष्टं किमर्थं प्रभो!
विद्वन्मण्डलके शुभे नरवरे दु:खं किमर्थं भृतम् ।।४।।

हृष्यन्ति स्म समेऽपि विप्रपुरुषा: भानुं विलोक्यैव ते,
गायन्ति स्म च गायकास्तु तबलाहस्तं च भानुं द्विजम्
नानाहास्यपरैरनेकरसभृन्मित्रैस्समामण्डितम्
स्मृत्वा चापररात्रकेऽहमिह वै जागर्मि गेहेऽधुना ।।५।।

******

## ।। श्रीदिव्यानन्दतीर्थमहाराजेभ्यश्श्रद्धाञ्जलि: ।।

*************

शास्त्रार्थान्वदति स्म धर्मदिशया नानानिदर्शैश्च य:
श्रीमद्रामकथासुधां वितरति श्रद्धालुवर्गाय च
तद्वद्रोचकपद्धतिप्रियजना: नन्दन्ति यद्वाचनो
दिव्यानन्दयतिं शुभाभृतमनस्कं तं नुमश्श्रद्धया।।१।।

सन्यासप्रतिपादितैकपथगश्श्रीभानुपीठाधिपो
विद्यासारगतप्रसादितमुखो ज्ञानाम्बुधाराधिपो

गोविप्रप्रतिपालनप्रियमखो यज्ञव्रताराधको
दिव्यानन्दयतिं तमर्थपदवीप्राप्तं नमस्कुर्महे।।२।।

धर्माधर्मविवेचनातिकुशलो धीमत्पुराधीश्वरो
कार्याकार्यनिरीक्षतीक्ष्णमतिमान् श्रीमत्पुराधीश्वर:
सत्यासत्यविनिर्णये पटुतरो धर्मप्रतानेश्वरो
दिव्यानन्दयतीश्वरो विजयते श्रीभानुपीठेश्वर:।।३।।

शम्भोस्तन्त्रविभिन्नतथ्यकथनं तन्त्रक्रियोद्धासकं
भक्तेस्सत्यसुरूपवाचनपरं पौराणिकज्ञानदं
शक्तेरर्चनपद्धतिश्रितशिवामाहात्म्यभावप्रदं
तं श्रीभानुपुराधिपं यतिवरं श्रद्धाञ्जलिं ह्यर्पये।।४।।

पुण्यप्रेमपराय भक्तिमनसे सन्याससंश्राविणे
सत्सङ्गप्रियभावुकाय हनुमन्नाथप्रियायापि ते
श्रौतोद्धासिपरम्पराप्रियपथोद्गामिप्रथाप्रार्थिने
दिव्यानन्दयतीश्वराय सततं श्रद्धाञ्जलिं कुर्महे।।५।।

धनानन्दं व्रजन्त्येके कामानन्दं परे जना:।
वयं हिमांशवो गौडा: दिव्यानन्दमुपास्महे।।६।।

******

## ॥ श्रीआनन्दाश्रमजीमहाराजाय श्रद्धाञ्जलिः ॥

*************

श्रीबाबागुरुराश्रमे यतिनुतं प्रेम्णा निवासं ह्यदात्
तद्वै निम्बतरोस्तलस्थभवने मन्नेत्रवर्ति ध्रुवं
काषायेन सुवेष्टितं धरति यो दण्डं स्वहस्ते सदा
भ्राम्येद्यश्च सनातनध्वजधरोऽद्य ब्रह्मलोकङ्गत:॥१॥

साङ्ख्याद्यध्ययने रतोऽस्मि हनुमद्धामातिरम्याश्रमे
दृष्टस्तत्र हरीशजप्यनिरतश्शास्त्रिद्वितीये मया
चायात: कपिमन्दिराद्यतिवरो गङ्गावगाहप्रियश्-
श्रीओमादिपदप्रियावृतगुरु: "आनन्दपूर्वाश्रम:"॥२॥

यं पश्यामि यदा कदा स्वमनसि श्रेयोऽर्थसञ्जीविनं
येनैवात्र मुदा  सदा नरवरे वास: कृतश्श्रद्धया
सारल्ये स च बालवद् व्यवहरेत् सौख्याननो भ्राम्यति
"आनन्दाश्रम"नामभाग् यतिवरो गोलोकवासं गत: ॥३॥

य: खर्वोऽपि विशालहृद् द्विजबटुप्रेमार्पणे संरत:
प्रायो यो वसति स्म वै हनुमतो गङ्गातटस्थालये
यस्याप्याश्रमसन्निवासिपुरुषा: बालाश्च विद्यार्थिन:
नूनं स्नेहसुसिक्तमानसहृदस्स ब्रह्मलीनोऽधुना ॥४॥

हे हे विप्रसुरागरञ्जितयते! हे विष्णुनामामृत!
हे हेमादिविवर्जितश्शुभवपुष्! हे श्रीकपीशालय!
हे हेमाद्रिशुभाधिवासिशिवराड्ध्यायिन्! मुदा भ्राजितस्-
त्वं नूनन्द्विजराजहार्दिकजन:कैश्चिन्न वै विस्मृत:॥५॥

स्मारं स्मारमहं च तं शुभयतिं दृश्यं ह्युपास्थापयम्
येष्वेतेन सहाऽवसं नरवरे बाबागुरोरालये
वेदान्तादिपदप्रतिष्ठितजनैस्सम्मानितश्शोभितो
ऽह्योऽस्माकं स सताम्प्रियोऽतिविमलोऽद्य ब्रह्मतत्त्वं गतः।।६।।

दृश्येऽस्मिंश्च मनीषशर्मसुजनश्शिष्योऽस्य संलोक्यते
यश्श्रीभागवतादिवाचनरतो भ्राम्येत्सदा भूतले
दुर्वासादिकनैकशिष्यविनतं श्रीमद्धिमांशुप्रियं
आनन्दाश्रमसाधुमद्य मनसा सञ्चिन्तये भावुकम् ।।७।।

******

तत्स्नेहार्द्रो हिमांशुर्गौडो
लेखनकालो दिनाङ्कश्च
१२:३० मध्याह्ने, ०२/०२/२०२०
गाजियाबादस्थे गृहे

******

## ।। श्रीदेवदूत-गुरवे श्रद्धाञ्जलिः।।

*************

हे देवदूत! बुधराट्! द्विजसौख्यकारिन्!
हे हृष्टशिष्टपुरुष श्रुतिशास्त्रधारिन्!
हेरम्बपूजनरतो हरिहर्षहार्द!
हे हे हरिद्धयरथार्चक! हेशलीनः।।१।

हा हाऽद्य वै नरवरात् प्रथितास्ति चर्चा

यो देवदूतगुरुरद्य दिवङ्गतोऽसौ
किं देवदेशवसतिस्स सुरोपदेष्टा
श्रीमद्धरेः पुरमयाद्वदत द्विजा हे?२?

मध्याह्नकालकृतभोजनविश्रमोऽहं
तिष्ठन्विभिन्नपरिचिन्तनसंरतोऽद्य
श्रुत्वा प्रभातवचसा बत दूरवाण्या
निस्तब्धतां प्रतिगतस्सुरदूतमृत्युम् ।।३।।

यद्वा प्रशान्तनिलये भवतस्सकाशे
खेलेन्द्रनीरजविनोदजनैस्सहाहं
कृत्वापि शास्त्रपरिचर्चनमोदनानि
विद्यार्थिकालदिवसानि हृदा व्यनैषम् ।।४।।

हे हे प्रभातसमयेऽथ गजेन्द्रमोक्षं
उच्चैस्स्म गायति ह विष्णुसहस्रनाम
नानार्थभाष्यशरणं सुरगाथनं च
श्रीमन् सदैव भवतो वचसैव लब्धम् ।।५।।

हे हे पचौरिविदित! श्रुतिनेत्रशालिन्!
हे हे सदा प्रतिभया भुवि भासशालिन्!
नूनं निशम्य भवतस्सुरलोकयात्रां
किं भावयानि हृदये न विचारशक्तः।।६।।

यच्चाष्टकं विलिखितं भवते मयैव
तच्छ्रावितं च भवते मुदितात्मनैव

बाबागुरुर्ह्यपि भवद्गुणगौरवेण
प्रेमादरं प्रतिदिनं त्वनुवर्तमान:।।७।।

गङ्गाजलानि तुलसीदलमिश्रितानि
भोज्यानि सात्त्विकजनैरभिनन्दितानि
विष्णवच्युतेशकमलापतिकीर्तनानि
हे देवदूत! तव दिव्यपथं सृजन्ति।।८।।

विश्वस्तिरीशभजने श्रुतिशास्त्रवाक्ये
प्रीतिश्च साधुपुरुषे द्विजदेवकार्ये
गीताक्षराण्यपि गुरो! दिवि मूर्तिमन्ति
हे देवदूत! तव विष्णुपथं सृजन्ति।।९।।

शोचन्ति नैव सुजनाश्च शरीरनाशे
किन्त्वद्य वै नरवरात् हृतमीश! रत्नं
शान्तिं तवात्मन इवेह समर्थयन्तश्-
श्रद्धाञ्जलिं गुरुपदे वयमर्पयाम:।।१०।।

हे वाग्जलैरहरह: परिपावमानो
हे हे विनोदकरणोथ विनोदपूज्य
हे श्रीपुराणगततत्त्वविवेकशील
श्रीमत्पचौरिबुध ते स्मृतिरस्ति चित्ते।।११।।

श्रीमन्शिवाढ्यगुणगर्वितगायकैश्च
न्यायाभिरक्तमतिपूजितपादपद्म!
पातञ्जलाढ्यपुरुषैरभिसंवृतश्च

शब्दाञ्जलिश्रितहृदा परितर्पयामि।।१२।।

हे देहनष्टिविदितात्मगुणानुरागिन्
हे सत्कवीशचरितामृतमोदपायिन्
हे श्रीकपीशमहिमाढ्यसमृद्धवृद्ध!
श्रीदेवदूतविदिताऽद्य वयं स्मरामः।।१३।।

श्लिष्टा क्रिया, न भवतः पुनरात्मसंस्था
चेष्टा सदेष्टसुरगुण्यपदप्रदा ते
दृष्टा मतिश्च भवतः पटवर्धने वै
अस्मन्मनस्सु शतधा पटवर्धनाख्य!!१४!!

शौवस्तिको नरवरे मम चागमस्स्यात्
त्वत्स्मार्त्तभूतशुभतामिव चाद्य सृष्ट्वा
रात्रौ गताँश्च दिवसान्हृदये विचिन्त्य
श्रद्धाञ्जलिं प्रतनुते हिमवाञ्जनोऽसौ।।१५।।

******

हिमांशुगौडः
०७:३८ दिनान्ते,०७/०२/२०२०

| ।। डॉ.हिमांशुगौडस्य संस्कृतकाव्यरचनाः ।। | | |
|---|---|---|
| १ | श्रीगणेशशतकम् | (गणेशभक्तिभृतं काव्यम्) |
| २ | सूर्यशतकम् | (सूर्यवन्दनपरं काव्यम् ) |
| ३ | पितृशतकम् | (पितृश्रद्धानिरूपकं काव्यम्) |
| ४ | मित्रशतकम् | ( मित्रसम्बन्धे विविधभावसमन्वितं काव्यम् ) |
| ५ | श्रीबाबागुरुशतकम् | (श्रीबाबागुरुगुणवन्दनपरं शतश्लोकात्मकं काव्यम्) |
| ६ | भावश्रीः | ( पत्रकाव्यसङ्ग्रहः ) |
| ७ | वन्द्यश्रीः | (वन्दनाभिनन्दनादिकाव्यसङ्ग्रहः) |
| ८ | काव्यश्रीः | (बहुविधकवितासङ्ग्रहः) |
| ९ | भारतं भव्यभूमिः | ( भारतभक्तिसंयुतं काव्यम् ) |
| १० | दूर्वाशतकम् | (दूर्वामाश्रित्य विविधविचारसंवलितं शतश्लोकात्मकं काव्यम्) |
| ११ | नरवरभूमिः | (नरवरभूमिमहिमख्यापकं खण्डकाव्यम्) |
| १२ | नरवरगाथा | (पञ्चकाण्डान्वितं काव्यम्) |
| १३ | नारवरी | (नरवरस्य विविधदृश्यविचारवर्णकं काव्यम् ) |
| १४ | दिव्यन्धरशतकम् | (काल्पनिकनायकस्य गुणौजस्समन्वितं काव्यम्) |
| १५ | कल्पनाकारशतकम् | (कल्पनाकारचित्रकल्पनामोदवर्णकम्) |
| १६ | कलिकामकेलिः | (कलौ कामनृत्यवर्णकं काव्यम्) |